ॐ अनुष्टुभे छन्दसे नमः विश्वेभ्यो देवेभ्यो नमः इति ऊर्वोः।

ॐ पङ्क्त्यै छन्दसे नमः मरुद्भ्यो नमः इति जान्वोः।

ॐ द्विपदायै छन्दसे नमः विष्णवे नमः इति पादयोः।

ॐ विच्छन्दसे नमः वायवे नमः इति नासापुटस्थप्राणेषु।

ॐ न्यूनाक्षराय छन्दसे नमः अद्भ्यो नमः इति हस्तद्वयविपर्यासेन मस्तकादिपादान्तम्।

## इति छन्दःपुरुषन्यासः।

## अथ संक्षिप्तपुरुषसूक्तन्यासः।

सहस्रशीर्षेत्यादि-षोडशर्चस्य पुरुषसूक्तस्य नारायण ऋषिः आद्यानां पञ्चदशानामनुष्टुप्छन्दः, यज्ञेन यज्ञमित्यस्य त्रिष्टुप्छन्दः, जगद्बीजं नारायणपुरुषो देवता, न्यासे हवने च विनियोगः।

| | | |
|---|---|---|
| १ | ॐ सहस्रशीर्षा० | वामकरे। |
| २ | ॐ पुरुष एव० | दक्षिणकरे। |
| ३ | ॐ एतावानस्य० | वामपादे। |
| ४ | ॐ त्रिपादूर्ध्वः० | दक्षिणपादे। |
| ५ | ॐ ततो विराडजायत० | वामजानौ। |
| ६ | ॐ तस्माद्यज्ञात् सर्वहुतः० | दक्षिणजानौ। |
| ७ | ॐ तस्माद्यज्ञात् सर्वहुतऋचः० | वामकट्याम्। |
| ८ | ॐ तस्मादश्वा० | दक्षिणकट्याम्। |
| ९ | ॐ तं यज्ञं वर्हिषि० | नाभौ। |
| १० | ॐ यत्पुरुषं व्यदधुः० | हृदये। |
| ११ | ॐ ब्राह्मणोऽस्य० | वामबाहौ। |
| १२ | ॐ चन्द्रमा मनसः० | दक्षिणबाहौ। |

१३ ॐ नाभ्या ऽआसीदन्त० कण्ठे ।
१४ ॐ यत्पुरुषेण हविषा० मुखे ।
१५ ॐ सप्तास्यासन्० अक्ष्णोः ।
१६ ॐ यज्ञेन यज्ञम्० मूर्ध्नि ।

पुनः—

१ ब्राह्मणोऽस्य० हृदयाय नमः ।
२ चन्द्रमा मनसः० शिरसे स्वाहा ।
३ नाभ्या ऽआसीदन्त० शिखायै वषट् ।
४ यत्पुरुषेण हविषा० नेत्रत्रयाय वौषट् ।
५ सप्तास्यासन्० कवचाय हुम् ।
६ यज्ञेन यज्ञम्० अस्त्राय फट् ।

ध्यानम्—ध्येयः सदा सवितृमण्डलमध्यवर्ती
नारायणः सरसिजासनसन्निविष्टः ।
केयूरवान् मकरकुण्डलवान् किरीटी
हारी हिरण्मयवपुर्धृतशङ्खचक्रः ॥१॥
शान्ताकारं भुजगशयनं पद्मनाभं सुरेशं
विश्वाधारं गगनसदृशं मेघवर्णं शुभाङ्गम् ।
लक्ष्मीकान्तं कमलनयनं योगिभिर्ध्यानगम्यं
वन्दे विष्णुं भवभयहरं सर्वलोकैकनाथम् ॥२॥

इति पुरुषसूक्तन्यासः ।

## अथ *श्रीसूक्तन्यासः ।

हिरण्यवर्णामिति पञ्चदशर्चस्य श्रीसूक्तस्य आनन्द-कर्दम-चिक्लीतेन्दिरासुता ऋषयः, आद्यानां तिसृणामनुष्टुप्छन्दः, चतुर्थ्याः प्रस्तारपंक्तिश्छन्दः, पञ्चमीषष्ठचोस्त्रिष्टुप्छन्दः, ततोऽष्टानामनुष्टुप्छन्दः, अन्त्यायाः प्रस्तारपंक्तिश्छन्दः, न्यासे हवने च विनियोगः।

| | | |
|---|---|---|
| १ | ॐ हिरण्यवर्णाम्० । | वामकरे । |
| २ | ॐ तां म आवह० । | दक्षिणकरे । |
| ३ | ॐ अश्वपूर्वाम्० । | वामपादे । |
| ४ | ॐ कां सोस्मिताम्० । | दक्षिणपादे । |
| ५ | ॐ चन्द्रां प्रभासाम्० । | वामजानौ । |
| ६ | ॐ आदित्यवर्णे० | दक्षिणजानौ । |
| ७ | ॐ उपैतु माम्० | वामकटचाम् । |
| ८ | ॐ क्षुत्पिपासामलाम्० | दक्षिणकटचाम् । |
| ९ | ॐ गन्धद्वाराम्० । | नाभौ । |
| १० | ॐ मनसः काममाकूतिम्० | हृदये । |
| ११ | ॐ कर्दमेन प्रजा भूता० | वामबाहौ । |
| १२ | ॐ आपः सृजन्तु० | दक्षिणबाहौ । |
| १३ | ॐ आर्द्रां पुष्करिणीम्० | कण्ठे । |
| १४ | ॐ आर्द्रां यष्करिणीम्० । | मुखे । |

---

* हिरण्यवर्णामिति पञ्चदशर्चस्य श्रीसूक्तस्य आनन्दकर्दमचिक्लीतेन्दिरासुता ऋषयः आद्यत्रयस्यानुष्टुप्छन्दः, कां सोऽस्मीत्यस्य बृहतीछन्दः, चन्द्रां प्रभासामिति द्वयोस्त्रिष्टुप्छन्दः, उपैतु मां देवसख इत्यष्टकस्यानुष्टुप्छन्दः, अन्त्यस्य प्रस्तारपंक्तिश्छन्दः, श्रीरग्निश्च देवते, व्यञ्जनानि बीजानि, स्वराः शक्तयः, बिन्दुः कीलकं, महालक्ष्मीप्रीत्यर्थं न्यासे हवने च विनियोग. ।

१५ ॐ तां मऽ आवह० नेत्रयोः ।
१६ ॐ यः शुचिः प्रयतो भूत्वा० मूर्ध्नि ।
पुनः—
१ कर्दमेन प्रजाभूता० हृदयाय नमः ।
२ आपः सृजन्तु० शिरसे स्वाहा ।
३ आर्द्रां पुष्करिणीम्० शिखायै वषट् ।
४ आर्द्रां यष्करिणीम्० कवचाय हुम् ।
५ तां म आवह० नेत्राभ्यां वौषट् ।
६ यः शुचिः प्रयतो भूत्वा० अस्त्राय फट् ।

ध्यानम्—या सा पद्मासनस्था विपुलकटितटी पद्मपत्रायताक्षी
गम्भीरावर्तनाभिस्तनभरनमिता शुभ्रवस्त्रोत्तरीया ।
लक्ष्मीर्दिव्यैर्गजेन्द्रैर्मणिगणखचितैः स्नापिता हेमकुम्भै-
र्नित्यं सा पद्महस्ता मम वसतु गृहे सर्वमाङ्गल्ययुक्ता ॥१॥
अमलकमलसंस्था तद्रजःपुञ्जवर्णा
करकमलधृतेष्टाभीतियुग्माम्बुजा च ।
मणिमुकुटविचित्रालङ्कृताकल्पजालै-
र्भवतु भुवनमाता सन्ततं श्रीः श्रियै नः ॥२॥

इति श्रीसूक्तन्यासः ।

## अथ सूर्यसूक्तन्यासः ।

विभ्राडित्यस्य विभ्राट्सौर्य ऋषिः त्रिष्टुप् छन्दः सूर्यो देवता, उदुत्यमिति तिसृणां प्रस्कण्व ऋषिर्गायत्रीछन्दः, सूर्यो देवता, तं प्रत्नथेत्यस्य काश्यपवत्सावृषी त्रिष्टुप्छन्दः सोमो देवता, अयं वेन इत्यस्य वेन ऋषिस्त्रिष्टुप्छन्दः सोमो देवता, चित्र-मित्यस्य कुत्साङ्गिरस ऋषिस्त्रिष्टुप्छन्दः सूर्यो देवता, आन इत्यस्य

अगस्त्य ऋषिस्त्रिष्टुप्छन्दः सूर्यो देवता, यदद्येत्यस्य श्रुतकक्षसुतकक्षावृषी गायत्रीछन्दः सूर्यो देवता, तरणिरित्यस्य प्रस्कण्व ऋषिः गायत्रीछन्दः सूर्यो देवता, तत्सूर्यस्येति द्वयोः कुत्स ऋषिस्त्रिष्टुप्छन्दः सूर्यो देवता, बण्महानिति द्वयोर्जमदग्निर्ऋषिः आद्यस्य बृहतीछन्दः द्वितीयस्य सतोबृहतीछन्दः सूर्यो देवता, श्रायन्त इवेत्यस्य नृमेध ऋषिः बृहतीछन्दः सूर्यो देवता, अद्या देवा इत्यस्य कुत्सऋषिस्त्रिष्टुप्छन्दः सूर्यो देवता, आकृष्णेनेत्यस्य हिरण्यस्तूपाङ्गिरसावृषी त्रिष्टुप्छन्दः सूर्यो देवता, न्यासे होमे च विनियोगः।

१ ॐ विभ्राड् बृहत्० वामकरे।
२ ॐ उदुत्यम्० दक्षिणकरे।
३ ॐ येना पावक चक्षसा० वामपादे।
४ ॐ दैव्यावद्ध्वर्यू० दक्षिणपादे।
५ ॐ तं प्रत्नथा० वामजानौ।
६ ॐ अयं वेनः० दक्षिणजानौ।
७ ॐ चित्रं देवानाम्० वामकट्याम्।
८ ॐ आन ऽइडाभिः० दक्षिणकट्याम्।
९ ॐ यदद्य कच्च० हृदये।
१० ॐ तरणिर्विश्व० नाभौ।
११ ॐ तत्सूर्यस्य० कण्ठे।
१२ ॐ तन्मित्रस्य० वामबाहौ।
१३ ॐ बण्महान्० दक्षिणबाहौ।
१४ ॐ बट्सूर्य श्रवसा० मुखे।
१५ ॐ श्रायन्त ऽइव० अक्ष्णोः।
१६ ॐ अद्या देवाः० शिरसि।
१७ ॐ आकृष्णेन० सर्वाङ्गे।

पुनः—

१ तन्मित्रस्य० हृदयाय नमः।

२ बण्महान्० — शिरसे स्वाहा ।
३ वट्सूर्य श्रवसा० — शिखायै वषट् ।
४ आयन्त ऽइव० — नेत्रत्रयाय वौषट् ।
५ अद्यादेवा० — कवचाय हुम् ।
६ आकृष्णेन० — अस्त्राय फट् ।

अथ षडङ्गकरन्यासः—

ॐ विभ्राडिति अङ्गुष्ठाभ्यां नमः । ॐ दैव्यावद्ध्वर्य्यवेति तर्जनीभ्यां नमः । ॐ चित्रन्देवानामिति मध्यमाभ्यां नमः । ॐ तरणिर्विश्वेति अनामिकाभ्यां नमः । ॐ बट् सूर्य्येति कनिष्ठिकाभ्यां नमः । ॐ आकृष्णेनेति करतलकरपृष्ठाभ्यां नमः ।

ध्यानम्—ध्येयः सदा सवितृमण्डलमध्यवर्ती
नारायणः सरसिजासनसन्निविष्टः ।
केयूरवान्मकरकुण्डलवान् किरीटी
हारी हिरण्मयवपुर्धृतशङ्खचक्रः ॥

इति सूर्यसूक्तन्यासः ।

## अथ गणपतिसूक्तन्यासः ।

आ तू न इत्यष्टऋचात्मकस्य गणपतिसूक्तस्य वामदेव-नृमेध-कुत्स-भरद्वाज-वसिष्ठ-पुरुमीढाजमीढ-दक्षा ऋषयः, प्रथमा गायत्री, द्वितीय-तृतीये पत्थ्याबृहतीसतोबृहत्यौ, चतुर्थी त्रिष्टुप्, पञ्चमी जगती, षष्ठी त्रिष्टुप्, सप्तम्यष्टम्यौ गायत्र्यौ, आद्यास्तिस्र ऐन्द्रचः,चतुर्थ्यादित्या, पञ्चमी सावित्री, षष्ठी वायवी, सप्तमी ऐन्द्री, अष्टमी मैत्रावरुणी, सर्वासां न्यासे होमे च विनियोगः ।

ॐ आ तू न इन्द्र वृत्रहन — शिरसि ।
अस्माकमर्द्धमागहि — शिखायाम् ।

| | |
|---|---|
| महान् महीभिरूतिभिः | वामभुजे । |
| त्वमिन्द्र प्रतूर्तिषु | दक्षिणभुजे । |
| अभि विश्वा असि स्पृधः | वामनेत्रे । |
| अशस्ति हा जनिता व्विश्वतूरसि | दक्षिणनेत्रे । |
| त्वं तूर्य तरुष्यतः | भ्रूमध्ये । |
| अनु ते शुष्मन्तुरयन्तमीयतुः | मुखे । |
| क्षोणी शिशुन्न मातरा | जिह्वायाम् । |
| व्विश्वास्ते स्पृधः श्नथयन्त मन्यवे | ग्रीवायाम् । |
| व्वृत्रं यदिन्द्र तूर्व्वसि | हृदि । |
| यज्ञो देवानां प्रत्येति सुम्नम् | वक्षसि । |
| आदित्यासो भवता मृडयन्तः | वामबाहौ । |
| आवोऽर्व्वाची सुमतिर्व्ववृत्यादम् | दक्षिणबाहौ । |
| अंहोश्चिद्या व्वरिवो व्वित्तरासत् | उदरे । |
| अदब्धेभिः सवितः पायुभिष्ट्वम् | लिङ्गे । |
| शिवेभिरद्य परिपाहि नो गयम् | वामकट्याम् । |
| हिरण्यजिह्वः सुविताय नव्यसे | दक्षिणकट्याम् । |
| रक्षा माकिर्न्नो ऽअघशꣳस ऽईशत | नितम्बे । |
| प्रवीरया शुचयो दद्रिरेवा | गुह्ये । |
| अध्वर्युभिर्मधुमन्तः सुतासः | वामपादे । |
| व्वहव्वायो नियुतो याह्यच्छा | दक्षिणपादे । |
| पिबा सुतस्यान्धसो मदाय | जान्वोः । |
| गाव ऽउपावतावतम् | वामजङ्घायाम् । |
| मही यज्ञस्य रप्सुदा | दक्षिणजङ्घायाम् । |
| उभा कर्ण्णा हिरण्यया | नाभौ । |
| काव्ययोराजानेषु | ललाटे । |
| ऋत्वा दक्षस्य दुरोणे | स्तनयोः । |
| रिशादसा सधस्थ ऽआ | सर्वाङ्गेषु । |

ध्यानम्—गजाननं भूतगणादिसेवितं
कपित्थजम्बूफलचारुभक्षणम्।
उमासुतं शोकविनाशकारकं
नमामि विघ्नेश्वरपादपङ्कजम् ॥१॥

उद्यद्दिनेश्वररुचिं निजहस्तपद्मे
पाशाङ्कुशाभयवरान् दधतं गजास्यम्।
रक्ताम्बरं सकलदुःखहरं गणेशं
ध्यायेत् प्रसन्नमखिलाभरणाभिरामम् ॥ २ ॥

इति गणपतिसूक्तन्यासः।

अथ *नवग्रहमन्त्रन्यासः।

आ कृष्णेनेति हिरण्यस्तूप ऋषिस्त्रिष्टुप्छन्दः सविता देवता, इमन्देवा इति वरुण ऋषिः अत्यष्टिश्छन्दः सोमो देवता, अग्निर्मूर्धेति विरूपाक्ष ऋषिः गायत्रीछन्दः भौमो देवता, उद्बुध्यस्वेति परमेष्ठी ऋषिस्त्रिष्टुप्छन्दः बुधो देवता, बृहस्पत इति गृत्समद ऋषिस्त्रिष्टुप्छन्दः बृहस्पतिर्देवता, अन्नात्परिस्रुत इति प्रजापत्यश्विसरस्वतीन्द्रा ऋषयः अतिजगतीछन्दः शुक्रो देवता, शन्नो देवीरिति दध्यङ्ङाथर्वण ऋषिः गायत्रीछन्दः शनिर्देवता, कया नश्चित्र इति वामदेव ऋषिः गायत्री छन्दः राहुर्देवता, केतुं कृण्वन्निति मधुच्छन्दा ऋषिः गायत्रीछन्दः केतुर्देवता, सूर्यादिनवग्रहाणां जपे होमे च विनियोगः।

---

* सर्वविधप्रतिष्ठापद्धतिषु नवग्रहाणां न्यासस्त्वित्थं प्रदर्शितः—

रविचन्द्राभ्यां नेत्रयोः। भौमाय हृदये। बुधाय स्कन्धे। बृहस्पतये जिह्वायाम्। शुक्राय लिङ्गे। शनैश्चराय ललाटे। राहवे पादयोः। केतवे केशेषु।

| | | |
|---|---|---|
| १ | ॐ आ कृष्णेन० | हृदये। |
| २ | ॐ इमन्देवाः० | उदरे। |
| ३ | ॐ अग्निर्मूर्द्धा दिवः० | नाभौ। |
| ४ | ॐ उद्बुध्यस्वाग्ने० | कट्याम्। |
| ५ | ॐ बृहस्पते० | ऊर्वोः। |
| ६ | ॐ अन्नात्परिस्रुतः० | जान्वोः। |
| ७ | ॐ शन्नो देवीः० | जङ्घयोः। |
| ८ | ॐ कया नश्चित्रः० | पादयोः। |
| ९ | ॐ केतुं कृण्वन्० | सर्वाङ्गेषु। |

पुनः—

| | | |
|---|---|---|
| १ | ॐ उद्बुध्यस्वाग्ने० | हृदयाय नमः। |
| २ | ॐ बृहस्पतेऽअति० | शिरसे स्वाहा। |
| ३ | ॐ अन्नात्परिस्रुतः० | शिखायै वषट्। |
| ४ | ॐ शन्नो देवीः० | कवचाय हुम्। |
| ५ | ॐ कया नश्चित्रः० | नेत्रत्रयाय वौषट्। |
| ६ | ॐ केतुंकृण्वन्० | अस्त्राय फट्। |

ध्यानम्—ब्रह्मा मुरारिस्त्रिपुरान्तकारी
भानुः शशी भूमिसुतो बुधश्च।
गुरुश्च शुक्रः शनिराहुकेतवः
सर्वे ग्रहाः शान्तिकरा भवन्तु॥

इति नवग्रहमन्त्रन्यासः।

## अथ नवग्रहाधिदेवानां विनियोगः।

त्र्यम्बकमिति वसिष्ठ ऋषिः अनुष्टुप्छन्दः रुद्रो देवता, श्रीश्च ते इत्युत्तरनारायण ऋषिस्त्रिष्टुप्छन्दः उमा देवता, यदक्रन्द इति भार्गव-जमदग्निदीर्घतमस ऋषयस्त्रिष्टुप्छन्दः स्कन्दो

देवता, विष्णोरराटमसीति प्रजापतिर्ऋषिः यजुश्छन्दः विष्णुर्देवता, ब्रह्म जज्ञानमिति प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दः ब्रह्मा देवता, सजोषा इन्द्र इति विश्वामित्र ऋषिस्त्रिष्टुप् छन्दः इन्द्रो देवता, यमाय त्वेति प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दः यमो देवता, कार्षिरसीति प्रजापतिर्ऋषिः अनुष्टुप्छन्दः कालो देवता, चित्रावसो इति ऋषयः (१) जगती छन्दः चित्रगुप्तो देवता, नवग्रहाधिदेवताप्रीतये जपे होमे च विनियोगः।

## अथ नवग्रहप्रत्यधिदेवानां विनियोगः।

अग्निन्दूतमिति विरूपाक्ष ऋषिः गायत्रीछन्दः अग्निर्देवता, अप्स्वन्तरिति बृहस्पतिर्ऋषिः उष्णिक्छन्दः आपो देवता, स्योना पृथिवीति मेधातिथिर्ऋषिः गायत्रीछन्दः पृथिवी देवता, इदं विष्णुरिति मेधातिथिर्ऋषिः गायत्रीछन्दः विष्णुर्देवता, त्रातारमिन्द्रमिति गर्ग ऋषिस्त्रिष्टुप्छन्दः इन्द्रो देवता, अदित्यै रास्नासीति दध्यङ्ङाथर्वण ऋषिः यजुश्छन्दः इन्द्राणी देवता, प्रजापते इति हिरण्यगर्भ ऋषिस्त्रिष्टुप्छन्दः प्रजापतिर्देवता, नमोऽस्तु सर्पेभ्य इति प्रजापतिर्ऋषिः अनुष्टुप्छन्दः सर्पा देवताः, ब्रह्म जज्ञानमिति प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दः ब्रह्मा देवता, नवग्रहप्रत्यधिदेवताप्रीतये जपे होमे च विनियोगः।

---

(१) 'चित्रावसो रात्रिदैवत्यमृषयोऽपश्यन्' इस कात्यायन-सर्वानुक्रमसूत्रके अनुसार इस मन्त्रके द्रष्टा ऋषि [ ऋषयः ] ही हैं।

## अथ विश्वशान्तियज्ञस्य मन्त्रन्यासः।

ऋचं वाचमिति चतुर्विंशतिमन्त्राणां प्रजापतिर्ऋषिः गायत्री छन्दः विष्णुर्देवता, शान्त्यर्थं होमे विनियोगः।

| | |
|---|---|
| १ ॐ दृते दृꣳह मा ज्योक्ते० | हृदयाय नमः। |
| २ ॐ नमस्ते हरसे शोचिषे० | शिरसे स्वाहा। |
| ३ ॐ नमस्तेऽअस्तु विद्युते० | शिखायै वषट्। |
| ४ ॐ यतो यतः० | कवचाय हुम्। |
| ५ ॐ सुमित्रिया नः० | नेत्रत्रयाय वौषट्। |
| ६ ॐ तच्चक्षुः० | अस्त्राय फट्। |

ध्यानम्— शान्ताकारं भुजगशयनं पद्मनाभं सुरेशं
विश्वाधारं गगनसदृशं मेघवर्णं शुभाङ्गम्।
लक्ष्मीकान्तं कमलनयनं योगिभिर्ध्यानगम्यं
वन्दे विष्णुं भवभयहरं सर्वलोकैकनाथम्॥

## इति विश्वशान्तियज्ञस्य मन्त्रन्यासः।

## अथ विष्णुसहस्रनामावल्याः विनियोगः।

अस्य श्रीविष्णोर्दिव्यसहस्रनामस्तोत्रमन्त्रस्य भगवान वेदव्यास ऋषिः, श्रीकृष्णः परमात्मा देवता, अनुष्टुप् छन्दः, अमृतांशूद्भवो भानुरिति बीजम्, देवकीनन्दनः स्रष्टेति शक्तिः, त्रिसामासामगः सामेति हृदयम्, शङ्खभृन्नन्दकी चक्रीति कीलकम्, शार्ङ्गधन्वा गदाधर इत्यस्त्रम्, रथाङ्गपाणिरक्षोभ्य इति कवचम्, उद्भवः क्षोभणो देव इति परमो मन्त्रः, श्रीविष्णुप्रीत्यर्थं जपे होमे (सहस्रतुलसीदलसमर्पणे) विनियोगः।

ध्यानम्—शान्ताकारं भुजगशयनं पद्मनाभं सुरेशं
विश्वाधारं गगनसदृशं मेघवर्णं शुभाङ्गम् ।
लक्ष्मीकान्तं कमलनयनं योगिभिर्ध्यानगम्यं
वन्दे विष्णुं भवभयहरं सर्वलोकैकनाथम् ॥

इति विष्णुसहस्रनामावल्याः विनियोगः ।

## अथ गायत्रीमन्त्रस्य बृहन्न्यासः ।

### अथ प्रणवन्यासः—

ॐ प्रणवस्य ब्रह्मा ऋषिर्गायत्री छन्दः परमात्मा देवता, शरीरशुद्ध्यर्थे जपे विनियोगः ।

ॐ ब्रह्मऋषये नमः शिरसि ॥१॥ गायत्रीछन्दसे नमः मुखे ॥ २ ॥ ॐ परमात्मदेवतायै नमः हृदये ॥ ३ ॥ इति प्रणवन्यासः ।

### अथ व्याहृतिऋष्यादिन्यासः—

सप्तव्याहृतीनां जमदग्नि-भारद्वाजात्रि-गौतम-कश्यप-विश्वामित्र-वसिष्ठा ऋषयः गायत्र्युष्णिगनुष्टुब्बृहतीपंक्तित्रिष्टुब्जगत्यश्छन्दांसि अग्निवायु-सूर्य-बृहस्पति-वरुणेन्द्र-विश्वेदेवा देवताः, न्यासे जपे च विनियोगः ।

ॐ जमदग्नि-भारद्वाजात्रि-गौतम-कश्यप-विश्वामित्र-वसिष्ठ-ऋषिभ्यो नमः शिरसि ॥ १ ॥ ॐ गायत्र्युष्णिगनुष्टुब्बृहतीपंक्ति-त्रिष्टब्जगतीछन्दोभ्यो नमः मुखे ॥ २ ॥ ॐ अग्नि-वायु-सूर्य-बृहस्पति-वरुणेन्द्र-विश्वेदेव-देवताभ्यो नमः हृदये ॥ ३ ॥ इति व्याहृतिऋष्यादिन्यासः ।

## अथ गायत्र्या ऋष्यादिन्यासः—

ॐ गायत्र्या विश्वामित्रऋषिर्गायत्री छन्दः सविता देवता, न्यासे जपे च विनियोगः ।

ॐ विश्वामित्रऋषये नमः शिरसि ॥ १ ॥ ॐ गायत्रीछन्दसे नमः मुखे ॥ २ ॥ ॐ सवितृदेवतायै नमः हृदये ॥ ३ ॥ इति गायत्र्या ऋष्यादिन्यासः ।

## अथ शिरस ऋष्यादिन्यासः—

ॐ शिरसः प्रजापतिर्ऋषिः यजुश्छन्दः ब्रह्माग्निवायुसूर्या देवताः, प्राणायामे विनियोगः ।

ॐ प्रजापतिऋषये नमः शिरसि ॥ १ ॥ ॐ यजुश्छन्दसे नमः मुखे ॥ २ ॥ ॐ ब्रह्माग्नि-वायु-सूर्य-देवताभ्यो नमः हृदये ॥ ३ ॥ इति शिरस ऋष्यादिन्यासः ।

## अथ करन्यासः—

ॐ भूः अङ्गुष्ठाभ्यां नमः ॥ १ ॥ ॐ भुवः तर्जनीभ्यां नमः ॥ २ ॥ ॐ स्वः मध्यमाभ्यां नमः ॥ ३ ॥ ॐ तत्सवितुर्वरेण्यम् अनामिकाभ्यां नमः ॥ ४ ॥ ॐ भर्गो देवस्य धीमहि कनिष्ठिकाभ्यां नमः ॥ ५ ॥ ॐ धियो यो नः प्रचोदयात् करतलकरपृष्ठाभ्यां नमः ॥ ६ ॥ इति करन्यासः ।

## अथ हृदयादिन्यासः—

ॐ भूः हृदयाय नमः ॥ १ ॥ ॐ भुवः शिरसे स्वाहा ॥ २ ॥ ॐ स्वः शिखायै वषट् ॥ ३ ॥ ॐ तत्सवितुर्वरेण्यम् कवचाय हुम् ॥ ४ ॥ ॐ भर्गो देवस्य धीमहि नेत्राभ्यां वौषट् ॥ ५ ॥ ॐ धियो यो नः प्रचोदयात अस्त्राय फट् ॥६॥ इति हृदयादिन्यासः ।

अथ व्याहृतिन्यासः—

ॐ भूः नमः हृदये ॥१॥ ॐ भुवः नमः मुखे ॥२॥ ॐ स्वः नमः दक्षांसे ॥३॥ ॐ महः नमः वामांसे ॥४॥ ॐ जनः नमः दक्षिणोरौ ॥ ५ ॥ ॐ तपः नमः वामोरौ ॥६॥ ॐ सत्यं नमः जठरे ॥७॥ इति व्याहृतिन्यासः।

अथ गायत्र्यक्षरन्यासः—

ॐ तत् नमः पादद्वयाङ्गुलिमूलयोः ॥ १ ॥ ॐ सं नमः गुल्फयोः ॥ २ ॥ ॐ विं नमः जानुनोः ॥ ३ ॥ ॐ तुं नमः पादमूलयोः ॥ ४ ॥ ॐ वं नमः लिङ्गे ॥ ५ ॥ ॐ रें नमः नाभौ ॥ ६ ॥ ॐ णिं नमः हृदये ॥ ७ ॥ ॐ यं नमः कण्ठे ॥ ८ ॥ ॐ भं नमः हस्तद्वयाङ्गुलिमूलयोः ॥ ९ ॥ ॐ गों नमः मणिबन्धयोः ॥ १० ॥ ॐ दें नमः कूर्परयोः ॥ ११ ॥ ॐ वं नमः बाहुमूलयोः ॥ १२ ॥ ॐ स्यं नमः आस्ये ॥ १३ ॥ ॐ धीं नमः नासापुटयोः ॥ १४ ॥ ॐ मं नमः कपोलयोः ॥ १५ ॥ ॐ हिं नमः नेत्रयोः ॥ १६ ॥ ॐ धिं नमः कर्णयोः ॥ १७ ॥ ॐ यों नमः भ्रूमध्ये ॥ १८ ॥ ॐ यों नमः मस्तके ॥ १९ ॥ ॐ नं नमः पश्चिमवक्त्रे ॥ २० ॥ ॐ प्रं नमः उत्तरवक्त्रे ॥ २१ ॥ ॐ चों नमः दक्षिणवक्त्रे ॥ २२ ॥ ॐ दं नमः पूर्ववक्त्रे ॥ २३ ॥ ॐ यात् नमः ऊर्ध्ववक्त्रे ॥ २४ ॥ इति गायत्र्यक्षरन्यासः।

अथ गायत्रीपदन्यासः—

ॐ तत् नमः शिरसि ॥ १ ॥ ॐ सवितुर्नमः भ्रुवोर्मध्ये ॥ २ ॥ ॐ वरेण्यं नमः नेत्रयोः ॥ ३ ॥ ॐ भर्गो नमः मुखे ॥ ४ ॥ ॐ देवस्य नमः कण्ठे ॥ ५ ॥ ॐ धीमहि नमः हृदये ॥ ६ ॥ ॐ धियो नमः

नाभौ ॥ ७ ॥ ॐ यो नमः गुह्ये ॥ ८ ॥ ॐ नं नमः जानुनोः ॥ ९ ॥ ॐ प्रचोदयात् नमः पादयोः ॥ १० ॥ ॐ आपो ज्योतीरसोऽमृतं ब्रह्मभूर्भुवः स्वरोमिति शिरसि ॥ ११ ॥ इति गायत्रीपदन्यासः ।

अथ गायत्र्याः न्यासः—

ॐ तत्सवितुर्वरेण्यं नमः नाभ्यादिपादांगुलीपर्यन्तम् ॥ १ ॥ ॐ भर्गो देवस्य धीमहि नमः हृदयादिनाभ्यन्तम् ॥ २ ॥ ॐ धियो यो नः प्रचोदयात् नमः मूर्द्धादिहृदयान्तम् ॥ ३ ॥ इति गायत्र्याः न्यासः ।

अथ गायत्र्याः षडङ्गन्यासः—

ॐ तत्सवितुर्ब्रह्मणे हृदयाय नमः ॥ १ ॥ ॐ वरेण्यं विष्णवे शिरसे स्वाहा ॥ २ ॥ ॐ भर्गो देवस्य रुद्राय शिखायै वषट् ॥ ३ ॥ ॐ धीमहि ईश्वराय कवचाय हुम् ॥ ४ ॥ ॐ धियो यो नः सदाशिवाय नेत्रत्रयाय वौषट् ॥ ५ ॥ ॐ प्रचोदयात् सर्वात्मने अस्त्राय फट् ॥ ६ ॥ इति गायत्र्याः षडङ्गन्यासः ।

ध्यानम्—मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्रीक्षणै-
र्युक्तामिन्दुनिबद्धरत्नमुकुटां तत्त्वार्थवर्णात्मिकाम् ।
गायत्रीं वरदाभयाङ्कुशकशां पाशं कपालं गुणं
शङ्खं चक्रमथारविन्दयुगलं हस्तैर्वहन्तीं भजे ॥

इति गायत्रीमन्त्रस्य बृहन्न्यासः ।

अथ गायत्रीमन्त्रस्य द्वितीयः संक्षिप्तन्यासः ।

ॐ तत्सवितुरित्यस्य गायत्र्या विश्वामित्र ऋषिः गायत्री छन्दः सविता देवता, जपे विनियोगः ।

अथ करन्यासः —

ॐ भूः अङ्गुष्ठाभ्यां नमः। ॐ भुवः तर्जनीभ्यां नमः। ॐ स्वः मध्यमाभ्यां नमः। ॐ तत्सवितुर्वरेण्यम् अनामिकाङ्गुष्ठाभ्यां नमः। ॐ भर्गो देवस्य धीमहि कनिष्ठिकाभ्यां नमः। ॐ धियो यो नः प्रचोदयात् करतलकरपृष्ठाभ्यां नमः।

अथ हृदयादिन्यासः—

ॐ भूः हृदयाय नमः। ॐ भुवः शिरसे स्वाहा। ॐ स्वः शिखायै वषट्। ॐ तत्सवितुर्वरेण्यम् कवचाय हुम्। ॐ भर्गो देवस्य धीमहि नेत्रत्रयाय वौषट्। ॐ धियो यो नः प्रचोदयात् अस्त्राय फट्।

ध्यानम्—मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्रीक्षणै-
युक्तामिन्दुकलानिबद्धमुकुटां तत्त्वार्थवर्णात्मिकाम्।
गायत्रीं वरदाभयाङ्कुशकशां पाशं कपालं गुणं
शंखं चक्रमथारविन्दयुगलं हस्तैर्वहन्तीं भजे॥

इति गायत्रीमन्त्रस्य द्वितीयः संक्षिप्तन्यासः।

अथ गायत्रीमन्त्रस्य तृतीयः संक्षिप्तन्यासः।

ॐ तत्सवितुरिति गायत्र्या विश्वामित्रऋषिः गायत्रीछन्दः सविता देवता, जपे विनियोगः।

ॐ विश्वामित्राय ऋषये नमः शिरसि। ॐ गायत्रीछन्दसे नमः मुखे। ॐ सवितृदेवतायै नमः हृदि। ॐ तत्सवितुरित्यङ्गुष्ठाभ्यां नमः। ॐ वरेण्यं तर्जनीभ्यां नमः। ॐ भर्गो देवस्य मध्यमाभ्यां

नमः । ॐ धीमहि अनामिकाभ्यां नमः । ॐ धियो यो नः कनिष्ठिकाभ्यां नमः। ॐ प्रचोदयात् करतलकरपृष्ठाभ्यां नमः।

ॐ तत्सवितुरिति हृदयाय नमः । ॐ वरेण्यमिति शिरसे स्वाहा। ॐ भर्गो देवस्य इति शिखायै वषट् । ॐ धीमहि इति कवचाय हुम् । ॐ धियो यो न इति नेत्राभ्यां वौषट् । ॐ प्रचोदयात् इति अस्त्राय फट् ।

ध्यानम्—मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्रीक्षणै-
र्युक्तामिन्दुनिबद्धरत्नमुकुटां तत्त्वार्थवर्णात्मिकाम् ।
गायत्रीं वरदाभयाङ्कुशकशां पाशं कपालं गुणं
शङ्खं चक्रमथारविन्दयुगलं हस्तैर्वहन्तीं भजे ॥

इति गायत्रीमन्त्रस्य तृतीयः संक्षिप्तन्यासः ।

## अनेक देवी-देवताओंकी गायत्री ।

१—दुर्गा-गायत्री—

( क ) कात्यायन्यै विद्महे *कन्यकुमारि धीमहि। तन्नो दुर्गिः प्रचोदयात्। ( नारायणोपनिषत् )

( ख ) कात्यायन्यै विद्महे कन्याकुमार्यै धीमहि। तन्नो दुर्गा प्रचोदयात्। ( लिङ्गपुराण, उत्तरार्ध ४८।२६ )

२—लक्ष्मी-गायत्री—

( क ) महालक्ष्म्यै च विद्महे विष्णुपत्न्यै च धीमहि। तन्नो लक्ष्मीः प्रचोदयात् ॥ ( ऋग्वेद, परिशिष्टभाग )

---

* कन्या यादी कुमारी कन्यकुमारी ।

( ख ) महालक्ष्म्यै च विद्महे विष्णुप्रियायै धीमहि । तन्नो लक्ष्मीः प्रचोदयात् ॥ ( नारायणोपनिषत् ६ )

( ग ) महाम्बिकायै विद्महे कर्मसिद्ध्यै च धीमहि । तन्नो लक्ष्मीः प्रचोदयात् ॥ ( लिङ्गपुराण, उत्तरार्ध ४८।१३ )

३–राधा-गायत्री—

( क ) ॐ ह्रीं राधिकायै विद्महे गान्धर्विकायै धीमहि । तन्नो राधा प्रचोदयात् ॥

( ख ) ॐ वृषभानुजायै विद्महे कृष्णप्रियायै धीमहि । तन्नो राधिका प्रचोदयात् ॥

४–सीता-गायत्री—

जनकात्मजायै विद्महे रामपत्न्यै च धीमहि । तन्नः सीता प्रचोदयात् ॥

५–गङ्गा-गायत्री—

भागीरथ्यै च विद्महे विष्णुपद्यै च धीमहि । तन्नो गङ्गा प्रचोदयात् ॥

६–तुलसी-गायत्री—

तुलसीपत्राय विद्महे विष्णुप्रियाय धीमहि । तन्नो वृन्दा प्रचोदयात् ॥

७ बगलामुखी-गायत्री—

बगलामुख्यै विद्महे स्तम्भिन्यै धीमहि । तन्नो देवी प्रचोदयात् ॥

८–ब्रह्म-गायत्री—

(क) वेदात्मनाय विद्महे हिरण्यगर्भाय धीमहि। तन्नो ब्रह्म प्रचोदयात्॥ (नारायणोपनिषत् ६)

(ख) पद्मोद्भवाय विद्महे वेदवक्त्राय धीमहि। तन्नः स्रष्टा प्रचोदयात्॥ (लिङ्गपुराण, उत्तरार्ध ४८।१६)

९–विष्णु (नारायण) गायत्री —

नारायणाय विद्महे वासुदेवाय धीमहि। तन्नो विष्णुः प्रचोदयात्॥ (नारायणोपनिषत् ६)

१०–कृष्ण-गायत्री—

दामोदराय विद्महे वासुदेवाय धीमहि। तन्नः कृष्णः प्रचोदयात्॥
(महानारायणोपनिषत् ७)

११-शिव-गायत्री—

तत्पुरुषाय विद्महे महादेवाय धीमहि। तन्नो रुद्रः प्रचोदयात्॥
(नारायणोपनिषत् १४।२०)

१२-राम-गायत्री—

दाशरथाय विद्महे सीतावल्लभाय धीमहि। तन्नो रामः प्रचोदयात्॥ (महानारायणोपनिषत् ७)

१३-हनुमद्गायत्री—

रामदूताय विद्महे वायुपुत्राय धीमहि। तन्नो हनुमत्प्रचोदयात्॥

१४–गणेश-गायत्री—

(क) लम्बोदराय विद्महे महोदराय धीमहि। तन्नो दन्ती [illegible]दयात्॥ (अग्निपुराण ७१।६)

( ख ) एकदन्ताय विद्महे वक्रतुण्डाय धीमहि। तन्नो दन्ती प्रचोदयात्॥ ( अथर्वशीर्षोपनिषत् )

१५–कार्तिकेय ( स्कन्द अथवा षण्मुख ) गायत्री—

तत्पुरुषाय विद्महे महासेनाय धीमहि। तन्नः षण्मुखः प्रचोदयात्॥ ( तैत्तिरीयारण्यक, परि० १०।१ )

१६–परशुराम-गायत्री—

जामदग्न्याय विद्महे महावीराय धीमहि। तन्नः परशुरामः प्रचोदयात्॥

१७-अग्नि-गायत्री—

वैश्वानराय विद्महे लालीलाय धीमहि। तन्नो अग्निः प्रचोदयात्॥ ( नारायणोपनिषत् ७ )

१८–गुरु-गायत्री—

( क ) परब्रह्मणे विद्महे गुरुदेवाय धीमहि। तन्नो गुरुः प्रचोदयात्॥

( ख ) गुरुदेवाय विद्महे परब्रह्माय धीमहि। तन्नो गुरुः प्रचोदयात्॥

१९-सूर्य-गायत्री—

आदित्याय विद्महे सहस्त्रकिरणाय धीमहि। तन्नः सूर्यः प्रचोदयात्॥ ( सूर्योपनिषत् )

२०-चन्द्र-गायत्री—

अत्रिपुत्राय विद्महे सागरोद्भवाय धीमहि। तन्नश्चन्द्रः प्रचोदयात॥

## विष्णुयागस्य बृहत् सङ्कल्पः ।

विष्णुर्विष्णुर्विष्णुः श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्तमानस्य अद्य श्रीब्रह्मणोऽह्नि द्वितीयपरार्द्धे श्रीश्वेतवाराह-कल्पे वैवस्वतमन्वन्तरे अष्टाविंशतितमे कलियुगे कलिप्रथमचरणे जम्बूद्वीपे भरतखण्डे भारते वर्षे आर्यावर्तैकदेशे, अमुकक्षेत्रे अमुकनद्याः अमुके तीरे विक्रमशके बौद्धावतारे अमुकनाम्नि संवत्सरे अमुकायने अमुकऋतौ महामाङ्गल्यप्रदमासोत्तमे मासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकनक्षत्रे अमुकयोगे अमुककरणे अमुकराशिस्थिते चन्द्रे अमुकराशिस्थिते सूर्ये अमुक-राशिस्थिते देवगुरौ शेषेषु ग्रहेषु यथास्थानस्थितेषु सत्सु एवं गुणगणविशेषणविशिष्टायां शुभपुण्यतिथौ अमुकगोत्रोऽमुकशर्माहं अनाद्यविद्यावासनावासितान्तःप्रवृत्त्या प्रवर्त्तमानेऽस्मिन् महति संसारचक्रे विचित्राभिः कर्मगतिभिः विचित्रासु योनिषु अनेकधा जनित्वा केनापि पुण्यकर्मविशेषेण भगवत्कृपाकटाक्षवीक्षणात्म-सहायेन साम्प्रतिकं दुर्लभातिदुर्लभं मानवं देहमासादितवतः आजन्मनः सर्वास्ववस्थासु वाक्-पाणि-पाद-पायूपस्थ-घ्राण-रसन-श्रुति-चक्षुस्त्वङ्-मनःसम्पादितैः ऐन्द्रियकव्यापारविशेषैः प्रतिफलितानां ज्ञाताज्ञातावस्थासम्भवानां समेषामेनसामपनोद-पूर्वकं मम सकुटुम्बस्य सपरिवारस्य अस्मिन् महायज्ञे कायिक-वाचिक-मानसिक-आर्थिकसहयोगेन साहाय्यकारिणाम्, सर्वेषां भारतवर्षवास्तव्यानां चतुराश्रमस्थानां चातुर्वर्ण्यानां जनानाम्, विशेषतः एतत्प्रान्तीयानां सर्वेषां आबालवृद्धवनितानां गो-महि-ष्यादिसमस्ततिरश्चां च कायिक-वाचिक-मानसिक-सांसर्गिक-चतुर्विधपापक्षयपूर्वकम् आध्यात्मिक-आधिदैविक-आधिभौतिक-त्रिविध-तापोपशान्तिसकलदुःखाशेषनिवृत्तिपूर्वकम्, व्याध्यादि-

जरा-मृत्यु-रोग-भय-शोकाद्यपसर्गनिवृत्तिपुरस्सरम्, जन्मकुण्डल्याम्, वर्षकुण्डल्याम्, गोचरे च अरिष्टस्थितानाम् आदित्यादिनवग्रहाणामशुभफलनिरासपूर्वकम्, लग्नस्थमन्दार्क-पातालस्थभौम-मिथुनस्थाब्जनवमस्थाशिखिगोचराष्टकस्य जीव-ग्रहजन्यजायमानजनिष्यमाणसकलारिष्टनिवृत्तिपूर्वकम्, अङ्गारकादिक्रूरसम्मेलनसम्भाव्यदिव्यभौमान्तरिक्षसर्वोपप्लवादिसर्वापच्छान्त्यर्थम्, अतिवृष्टि-अनावृष्टि-भूकम्प-राष्ट्रविप्लव-दुर्भिक्षादि विविध-आधि-व्याधि-विविधकष्टनिवृत्तिपूर्वकनित्यकल्याणप्राप्त्यर्थम्, विपुलधन-धान्य-दीर्घायुष्ट्व-नैरुज्य-कीर्तिलाभ- सद्विद्योपार्जन-क्षेम-स्थैर्यैश्वर्य-गो-गजाश्वादिसम्पत्प्रवृद्ध्यर्थम्, सद्धर्मसद्बुद्धि-सद्विद्या-सद्विवेक-सदाचारादिप्राप्त्यर्थम्, तथैक-विंशतिकुलोद्धरणपूर्वकं समस्तपितॄणां निरतिशयानन्दशाश्वतवैकुण्ठलोकप्राप्त्यर्थं च सनातनधर्मेऽस्मिन् निरतिशयश्रद्धाभक्तिसम्पत्त्यर्थं सनातनधर्मप्रतिपादकानां साङ्गानां सरहस्यानां श्रुति-स्मृति-पुराणोपपुराणादीनां धार्मिकग्रन्थानां सर्वासां विद्यानां च अभिवृद्ध्यर्थम्, जाति-देश-धर्म-समाज-राष्ट्राभ्युत्थानपूर्वकतत्तत्सम्प्रदायादिविशिष्टस्य समस्तविश्वस्य सर्वविधकल्याणसम्पादनार्थम्, विशेषतः सनातने स्वधर्मे प्रीतिविवर्द्धनार्थम्—

'सर्वे च सुखिनः सन्तु सर्वे सन्तु निरामयाः।
सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग्भवेत्॥'

इति सदुद्देश्यसिद्धिद्वारा विश्वस्मिन् जगति सर्वविधशान्त्यर्थं धर्मग्लान्यधर्माभ्युत्थाननिवृत्तिपूर्वकं धर्मसंस्थापनार्थं च पुण्यकालेऽस्मिन् अनन्तकल्याणगुणगुणाकरस्य, ब्रह्म-रुद्रादि-वृन्दारकवृन्दवन्दित-पादारविन्दस्य, प्रपन्नजनपरिपालनपारिजातस्य, वन्दारुजनमन्दारस्य, निखिलवेद-वेदाङ्गैकप्रतिपाद्यस्य, सकललोकपावनस्य, आर्तत्राणपरायणस्य ध्रुव-प्रह्लाद-पुण्डरीक-गजेन्द्र-प्रभृति-भक्ततारणनिपुणस्य, धर्मार्थकाममोक्ष-चतुर्विधपुरुषार्थप्रदस्य, सायुज्य-सालोक्य-

सामीप्य-सारूप्यरूप-निर्वाणानन्तसुखप्रदायकस्य, भुक्ति-मुक्तिवितरण-विश्रतानन्तमहिममणिमण्डितस्य, करणाकरणान्यथाकरणचणस्य, अखण्डब्रह्माण्डमण्डलमण्डनस्य गो-ब्राह्मणप्रतिपालनबद्धदीक्षस्य, हरकोदण्डखण्डनाखण्डनपण्डितस्य, अखर्वगर्वपर्वताधित्यकासञ्चरद्रात्रिञ्चरनिकरपरिकरलोकरावणविरावणस्य, देश-काल-शक्ति-गुणापरिच्छेद्यमहामहिमनित्ययुक्तस्य आनख-शिख-सौन्दर्यह्रीणानङ्गमङ्गलस्वरूपस्य, रिङ्गत्तुङ्गतरङ्गगङ्गाप्रादुर्भावपटुपाटल-पादांगुलिभूषितस्य, सर्वमङ्गलाङ्गसङ्गिगङ्गाधरार्च्यमानारुण-चरणसरोजस्य, श्रीराम-कृष्णाद्यनेककलिकल्मषापहारिपुण्यागण्या-वतारधारकस्य, कर्तुमकर्तुमन्यथाकर्तुं समर्थस्य, सर्वसमर्थस्य, सर्व-सूत्रधारस्य, सर्वव्यापकस्य, विश्वज्योतिरवभासकस्य, करुणा-वरुणा-गारस्य, वामदक्षिणतो भार्याभ्यां श्रीभूभ्यां भूषितस्य, शङ्ख-चक्र-गदा-पद्मैरलंकृतबाहुचतुष्टयस्य, अनन्तकोटिब्रह्माण्डनायकस्य, भगवतः श्रीसूर्यमण्डलान्तर्वर्तिजगद्बीजपुरुषोत्तमवैकुण्ठाधिपतेः श्रीविष्णोः प्रीत्यर्थं सग्रहमखं विष्णुयागं चतुर्णां वेदानां पारायणं श्रीमद्भा-गवत-वाल्मीकीयरामायण-विष्णुपुराण-गीता-दुर्गादीनां पारायणं नवग्रहादीनां जपं च एभिर्द्विजकुलावतंसैः शमदमादिनिखिल-गुणगणभरितैर्विद्वद्भिः सह अद्यारभ्य पूर्णाहुतिपर्यन्तं करिष्ये ।

## विष्णुयागस्य लघुसङ्कल्पः ।

देशकालौ सङ्कीर्त्य मम सकुटुम्बस्य सपरिवारस्य अन्येषां भारतवर्षनिवासिनां, विशेषतः एतत्प्रान्तीयानां सर्वेषामाबाल-वृद्धवनितानां च नित्यकल्याणप्राप्त्यर्थं कायिक-वाचिक-मानसिक-सांसर्गिकचतुर्विधपापक्षयपूर्वकम्, आध्यात्मिक-आधिदैविक-आधिभौतिक-त्रिविधतापोपशान्तिसकलदुःखाशेषनिवृत्तिपूर्वकम्

विपुलधन–धान्य–पुत्र - पौत्र - दीर्घायुः - क्षेमस्थैर्यैश्वर्यादिसम्पत्प्रवृद्धचर्थम्, तथैकविंशतिकुलोद्धरणपूर्वकं समस्तपितृणां निरतिशयानन्दशाश्वतवैकुण्ठलोकनिवासार्थं सनातनधर्मेऽस्मिन् निरतिशयश्रद्धाभक्तिवृद्धचर्थं सनातनधर्मप्रतिपादकानां साङ्गानां सरहस्यानां श्रुति-स्मृति-पुराणोपपुराणादीनां धार्मिकग्रन्थानां सर्वासां विद्यानां च अभिवृद्धचर्थम्, विशेषतः सनातने स्वधर्मे प्रीतिविवर्द्धनार्थम्—

सर्वे च सुखिनः सन्तु सर्वे सन्तु निरामयाः ।
सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग्भवेत् ॥

—इति सदुद्देश्यसिद्धिद्वारा विश्वस्मिन् जगति सर्वविधशान्त्यर्थं धर्मग्लान्यधर्माभ्युत्थाननिवृत्तिपूर्वकं धर्मसंस्थापनार्थं च पुण्यकालेऽस्मिन् अनन्तकोटिब्रह्माण्डनायकस्य भगवतः श्रीसूर्यमण्डलान्तर्वर्तिजगद्बीजपुरुषोत्तमवैकुण्ठाधिपतेः श्रीविष्णोः प्रीत्यर्थं पञ्चकुण्डचात्मकं सग्रहमखं विष्णुयागं चतुर्णां वेदानां पारायणं श्रीमद्भागवत-वाल्मीकीयरामायण-विष्णुपुराण-गीता-दुर्गादीनां पारायणं नवग्रहादीनां जपं च एभिर्द्विजकुलावतंसैः शम-दमादि-निखिलगुणगणभरितैर्विद्वद्भिः सह अद्यारभ्य पूर्णाहुतिपर्यन्तं करिष्ये ।

## रुद्रयागसङ्कल्पः ।

देशकालौ सङ्कीर्त्य 'अमुकगोत्रः अमुक-शर्माहं मम सकुटुम्बस्य सपरिवारस्य तथा च अन्येषां जनानां विशेषतः एतत्प्रान्तीयानां सर्वेषां स्त्रीपुंसानां च नित्यकल्याणप्राप्त्यर्थं कायिक-वाचिक-मानसिक-सांसर्गिकचतुर्विधपापक्षयपूर्वकम् आध्यात्मिक-आधिदैविक-आधिभौतिकत्रिविधतापोपशान्तिसकलदुःखाशेषनिवृत्तिपरमपदप्राप्तिव्याध्यादिजरा – मृत्युरोग – भय – शोकाद्युपसर्गनिर्मुक्तिधन-धान्य-दीर्घायुष्ट्व-नैरुज्य-कीर्तिलाभ - सद्विद्योपार्जन-क्षेमस्थैर्यै-

श्वर्य-स्थिरलक्ष्मी-गो-गजाश्वादिसम्पत्प्रवृद्धये पवित्रतमास्मद्भारत-देशनिवासिनां सनातनधर्मश्रद्धावतां इतोऽप्यधिकं सनातनधर्मे श्रद्धाभिवृद्ध्यर्थम् अविद्यमानश्रद्धानाम् अन्येषां सनातनधर्मेऽस्मिन् निरतिशयश्रद्धाभक्तिसम्पत्त्यर्थं सनातनधर्मप्रतिपादकानां पुराणान्तानां धार्मिकग्रन्थानां सर्वासां विद्यानां च अभिवृद्ध्यर्थम्, विशेषतः सनातने स्वधर्मे प्रीतिविवर्द्धनार्थम्—

सर्वे च सुखिनः सन्तु सर्वे सन्तु निरामयाः ।
सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग्भवेत् ॥

—इति सदुद्देश्यसिद्धिद्वारा विश्वस्मिन् जगति सर्वविधशान्त्यर्थं धर्मग्लान्यधर्माभ्युत्थाननिवृत्तिपूर्वकं धर्मसंस्थापनार्थं च पुण्यकालेऽस्मिन् श्रीसाम्बसदाशिवप्रीत्यर्थं सग्रहमखं हवनात्मकं ( अभिषेकात्मकं ) महारुद्रयागम् महारुद्राभिषेकम् चतुर्णां वेदानां पारायणं श्रीमद्भागवत - विष्णुपुराण-वाल्मीकीयरामायण- गीता-दुर्गादिपाठं नवग्रहादिजपं च एभिर्द्विजैर्निखिलगुणगणभरितैर्विद्वद्भिः सह अद्यारभ्य पूर्णाहुत्यन्तं करिष्ये ।'

## हरिहरयागसङ्कल्पः ।

देशकालौ सङ्कीर्त्य गोत्रः ''शर्माहं मम सकुटुम्बस्य सपरिवारस्य तथाऽन्येषां समस्तभारतवर्षीयानां विशेषतः एतत्प्रान्तीयानां सर्वेषां आबालवृद्धवनिताजनानां कायिक-वाचिक मानसिक-सांसर्गिकचतुर्विधपापक्षयपूर्वकं जन्मकुण्डल्यां वर्षकुण्डल्यां मासकुण्डल्यां गोचरे च अरिष्टस्थितानां आदित्यादिनवग्रहाणामशुभफलनिरासार्थं दीर्घायुष्ट्व-धन-धान्य-क्षेमस्थैर्यैश्वर्यादिसर्वविधसम्पत्प्रवृद्ध्यर्थम्, इतोऽप्यधिकम् ऐहिकामुष्मिकसमस्तसौख्यसम्पादनपूर्वकं सनातनधर्मश्रद्धाभिवृद्ध्यर्थं सालोक्य-सामीप्य-सायुज्य-सारूप्यरूपमोक्षफलप्राप्त्यर्थं एकविंशतिकुलोद्धरणपूर्वकं समस्तपितॄणां निरतिशया-

नन्दशाश्वतवैकुण्ठलोकनिवासार्थं सनातनधर्मेऽस्मिन् निरतिशयश्रद्धाभक्तिप्रवृद्धयर्थं सनातनधर्मप्रतिपादकानां साङ्गानां सरहस्यानां श्रुति-स्मृति-पुराणोपपुराणादीनां धार्मिकग्रन्थानां सर्वासां विद्यानां च अभिवृद्धयर्थम्, विशेषतः सनातने स्वधर्मे प्रीतिविवर्द्धनार्थम्—

सर्वे च सुखिनः सन्तु सर्वे सन्तु निरामयाः।
सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग्भवेत् ॥

- इति सदुद्देश्यसिद्धिद्वारा विश्वस्मिन् जगति सर्वविधशान्त्यर्थं धर्मग्लान्यधर्माभ्युत्थाननिवृत्तिपूर्वकं धर्मसंस्थापनार्थं च धर्मार्थकाममोक्षचतुर्विधपुरुषार्थसिद्धिद्वारा श्रीहरिहरात्मकदेवताचरणारविन्दयोः सर्वदा श्रद्धा-भक्तिसिद्धयर्थं हरिहरात्मकदेवताप्रसादेन हरिहरदेवताप्रीत्यर्थं पुण्यकालेऽस्मिन् हरिहरात्मकस्य त्रिलोकनायकस्य भगवतः परमेश्वरस्य प्रीत्यर्थं सग्रहमखं हरिहरात्मकं यागं चतुर्णां वेदानां पारायणं शिवपुराण-विष्णुपुराण-श्रीमद्भागवत-गीता-वाल्मीकीयरामायण-दुर्गादीनां पारायणं नवग्रहादीनां जपं च एभिर्द्विजकुलावतंसैः प्रत्यक्षदेवस्वरूपैर्निखिलगुणगणभरितैर्विद्वद्भिः सह अद्यारभ्य पूर्णाहुत्यन्तं करिष्ये ।

## सूर्ययागसङ्कल्पः ।

विष्णुर्विष्णुर्विष्णुः० 'मम इह जन्मनि जन्मान्तरे वा कृतानां कायिक-वाचिक-मानसिक-सांसर्गिक-सर्वविधपापानां निवृत्तिपूर्वकं कुष्ठ-क्षय-अपस्मार-शिरोरोग-नेत्ररोग-उदररोग-दद्रु-कण्ड्वादिरोगाणां शमनपूर्वकं धर्मार्थ-काम-मोक्ष चतुर्विधपुरुषार्थसिद्धिद्वारा श्रीसूर्यनारायणदेवताप्रीत्यर्थं सग्रहमखं सूर्ययागं करिष्ये ।'

## नवग्रहयज्ञसङ्कल्पः ।

देशकालौ सङ्कीर्त्य 'मम जन्मराशेः सकाशान्नामराशेः सकाशाद्वा ये केचिद् विरुद्धस्थानस्थितसूर्यादिनवग्रहास्तैः सूचितं सूचयिष्यमाणं च यत्सर्वारिष्टं तद्विनाशार्थं श्रुति-स्मृति-पुराणोक्त-फलप्राप्त्यर्थं धर्मार्थकाममोक्षचतुर्विधपुरुषार्थसिद्धिद्वारा आदित्यादिनवग्रह-देवताप्रीत्यर्थं नवग्रहयागं करिष्ये ।'

## लक्ष्मीयागसङ्कल्पः ।

देशकालौ सङ्कीर्त्य 'मम सकुटुम्बस्य सपरिवारस्य नित्यकल्याण-प्राप्त्यर्थं कायिक-वाचिक-मानसिक-सांसर्गिक-चतुर्विधपापक्षयपूर्वकं सर्वविधसङ्कटनिवृत्तिपूर्वकं दीर्घायुरारोग्यप्राप्तिपूर्वकं पुत्र-पौत्राद्यभिवृद्धिपूर्वकं गृह-वाटिका-गो-गज-अश्व-शकटादिप्राप्ति-पूर्वकं तथाऽन्येषां ऐहिकामुष्मिकसर्वविधपदार्थानां प्राप्त्यर्थं अलक्ष्मीविनाशपूर्वकमनोऽभिलषितविपुललक्ष्मीप्राप्त्यर्थं सर्वदा मम गृहे लक्ष्मीनिवासार्थं च जगदम्बायाः श्रीमहालक्ष्मीदेव्याः प्रीत्यर्थं सग्रहमखं लक्ष्मीयागं करिष्ये ।'

## गायत्रीमहायज्ञसङ्कल्पः ।

विष्णुर्विष्णुर्विष्णुः श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्तमानस्य अद्य श्रीब्रह्मणोऽह्नि द्वितीययामे तृतीयमुहूर्ते श्रीश्वेत-वाराहकल्पे स्वायम्भुव–स्वारोचिषोत्तम-तामस-रैवत-चाक्षुषेति षण्मनूनामतिक्रमणे सम्प्रति सप्तमे वैवस्वतमन्वन्तरे अष्टा-विंशतितमस्य कलियुगस्य प्रथमचरणे जम्बूद्वीपे भारतखण्डे निखि-लजनपावने आर्यावर्तैकदेशे अमुकक्षेत्रे अमुकस्थाने अमुकनद्याः अमुके तटे विक्रमशके बौद्धावतारे अमुकनाम्नि संवत्सरे अमुकायने अमुकऋतौ अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुक-

नक्षत्रे अमुकयोगे अमुककरणे अमुकराशिस्थिते चन्द्रे अमुकराशिस्थिते सूर्ये अमुकराशिस्थिते देवगुरौ शेषेषु ग्रहेषु यथाराशिस्थानस्थितेषु सत्सु एवंग्रहगुणगणविशेषणविशिष्टायां शुभपुण्यतिथौ गोत्रः शर्माहं इह जन्मनि जन्मान्तरे वा वाक्-पाणि-पाद-पायूपस्थ-घ्राण-रसन-श्रुति-चक्षुस्त्वङमनःकृतानां ज्ञाताज्ञातावस्थासम्भवानां सर्वेषां गुरु-लघु-स्थूल-सूक्ष्मरूपाणां महापातकोपपातकानां पापक्षयपूर्वकम् मम सकुटुम्बस्य सपरिवारस्य सर्वेषां भारतवर्षीयानां आबाल-वृद्धवनिताजनानां च कायिक-वाचिक-मानसिक-सांसर्गिकचतुर्विध-पापक्षयपूर्वकम्, आध्यात्मिक-आधिदैविक-आधिभौतिक-त्रिविध-तापोपशान्तिसकलदुःखाशेषनिवृत्तिपूर्वकम् मम जन्मकुण्डल्यां वर्ष कुण्डल्यां मासकुण्डल्यां गोचरे चारिष्टस्थितानामादित्यादिनव-ग्रहाणामशुभफलनिरासपूर्वकसमस्तबाधानिवृत्तिपूर्वकम्, दीर्घायुष्ट्व-नैरुज्य-विपुलधन-धान्य-पुत्र-पौत्राद्यभिवृद्धयर्थम् एकविंशति-कुलोद्धरणपूर्वकसमस्तपितृणां निरतिशयानन्दशाश्वतदिव्यलोक-निवासार्थम्, सालोक्य-सामीप्य-सारूप्य-सायुज्यरूपमोक्षफलप्राप्त्यर्थम् पवित्रतमास्मद्भारतदेशनिवासिनां सनातनधर्मश्रद्धावतामितोऽप्यधिकं निखिलपुरुषार्थरत्नाकरे पवित्रतमे महनीये सनातनधर्मेऽस्मिन् निरतिशयश्रद्धाभक्तिसमुत्पत्त्यर्थम् सनातनधर्मप्रतिपादकानां वेदप्रभृतीनां पुराणादीनां धार्मिकग्रन्थानां सर्वासां च विद्यानामभिवृद्धयर्थम् अतिवृष्टि-अनावृष्टि-भूकम्प-राष्ट्रविप्लव-दुर्भिक्ष-आधि-व्याधि-जरा-मृत्यु-भय-शोकादिविविधोपद्रवैः परिपीडितानां सर्वेषां भारतवर्षनिवासिनां जनानां गो-महिष्यादिसमस्ततिरश्चां च सर्वविधकल्याणपुरस्सरं समुद्धारार्थं भरतभूमेः ललामभूतायाः भारतवर्षभूमेः सर्वविधशस्यवृद्धिपूर्वं रुवृक्षादीनां फल-पुष्पसमृद्धयर्थम्—

अपुत्राः पुत्रिणः सन्तु पुत्रिणः सन्तु पौत्रिणः।
निर्धनाः सधनाः सन्तु जीवन्तु शरदां शतम्॥

काले वर्षतु पर्जन्यः पृथिवी शस्यशालिनी।
देशोऽयं क्षोभरहितः सज्जनाः सन्तु निर्भयाः॥
सर्वे च सुखिनः सन्तु सर्वे सन्तु निरामयाः।
सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग्भवेत्॥

—इत्यादिसदुद्देश्यसिद्धिद्वारा विश्वस्मिन् जगति सर्वविध-शान्त्यर्थं धर्मग्लान्यधर्माभ्युत्थाननिवृत्तिपूर्वकं धर्मसंस्थापनार्थं च सनातनधर्मस्वरूपाणां महर्षिकल्पानां महात्मनां विदुषां च सन्निधौ पुण्यकालेऽस्मिन् समस्तधर्मावलम्बिनां जनानां विशेषतः सनातनधर्मतत्पराणां नराणां सकलकल्याणदात्र्याः, सज्जनानां शोकापहर्त्र्याः, जीवानां जनिदुःखमृत्युलहरीसन्तापहर्त्र्याः, सकल-लोकपावनकर्त्र्याः, समस्तलोकेषु सर्वशक्तिप्रदानकर्त्र्याः, भूत-भवि-ष्यद्-वर्तमानकाल-निर्माणकर्त्र्याः, ऐहलौकिक-पारलौकिकसर्वविध-सुखवैभव-भुक्ति-मुक्तिदात्र्याः, प्रौढानुग्रहपूर्णशीतलस्वभावशीलायाः, निखिल-निगमागमवचोभिः प्रशस्यमानायाः, ऋषि-महर्षि-साधु-महात्मभिः सम्पूजितायाः, श्रौत-स्मार्त-कर्मानुष्ठाननिरतैर्ब्राह्मणैः उपास्यमानायाः, सद्धर्म-सदाचारपरिपालनबद्धपरिकरैः क्षत्रियैः संसेव्यमानायाः, सत्य-सनातनधर्मोपदिष्टमार्ग-परिपालनतत्परैर्वैश्यैः परमार्हणीयायाः, द्विजातिनिर्धारितमार्गानु-सरणशीलैः शूद्रैः मातृवन्माननीयायाः, समस्तदेवगणानामाधार-भूतायाः, समस्तभुवनेषु विराजमानायाः, ऋग्यजुःसामाथर्वाख्यानां वेदानां मातृरूपायाः, सर्वशास्त्रस्वरूपायाः, सर्वविधवरदायिन्याः, सर्वविधकष्टनिवारिण्याः, भक्तजनार्तिविनाशिन्याः, सर्वशक्तिमय्याः, सर्वाविभासकतेजोमय्याः, सच्चिदानन्दात्मक-ब्रह्मविद्यास्वरूपायाः, सर्वभूतेषु ज्ञानरूपेण संस्थितायाः, चतुर्विंशत्यक्षरात्मकमन्त्र-रूपायाः, ब्रह्म-विष्णु-शिवस्वरूपायाः, जगदम्बायाः भगवत्याः सावित्र्याः गायत्रीदेव्याः प्रीत्यर्थं गायत्रीमहायज्ञं श्रीमद्भागवत-

देवीभागवत-दुर्गाप्रभृतीनां पारायणं नवग्रहादीनां जपं च एभिर्द्विजैः शम-दमादिनिखिलगुणगणभरितैर्विद्वद्भिः सह ( सर्वेषां प्रतिनिधिभूतोऽहं करिष्यामि ) करिष्ये ।

## दुर्गायागसङ्कल्पः ।

देशकालौ सङ्कीर्त्य 'मम सकुटुम्बस्य सपरिवारस्य तथाऽन्येषां सर्वेषां जनानां च सर्वापच्छान्तिपूर्वकं पुत्र-पौत्र-धन-धान्य-दीर्घायुरारोग्यैश्वर्यादिवृद्ध्यर्थं श्रुति-स्मृति-पुराणोक्तफलप्राप्त्यर्थं धर्मार्थ-काममोक्षचतुर्विधपुरुषार्थसिद्धिद्वारा श्रीदुर्गा-देवताप्रीतिकामनया श्रीमहाकाली-महालक्ष्मी-महासरस्वतीदेवताप्रीत्यर्थं सनवग्रहमखं दुर्गायागं करिष्ये ।'

## पर्जन्ययागसंकल्पः ।

देशकालौ सङ्कीर्त्य 'सर्वेषां मनुष्याणां पशु-पक्षिणां वृक्षादीनां च कल्याणार्थं अस्मिन् प्रान्ते अस्मिन् देशे अस्मिन् ग्रामे च अनावृष्टि-निवृत्तिद्वारा सद्यः सुवृष्टिप्राप्त्यर्थं इन्द्र-वरुणादिदेवानां प्रीत्यर्थं च सनवग्रहमखं पर्जन्ययागं करिष्ये ।'

## देवप्रतिष्ठासंकल्पः ।

देशकालौ सङ्कीर्त्य 'अमुकगोत्रोऽमुकशर्मा आसु मूर्तिषु लिङ्गे च देवकलासान्निध्यार्थं मम सभार्यस्य सपरिवारस्य सकलपापक्षय-पूर्वकं पितृतो मातृतश्च दश पूर्वान्दशापरानात्मानं चोद्धर्तुकामः क्षेमस्थैर्यदीर्घायुरारोग्यैश्वर्यस्थिरलक्ष्मीपुत्रपौत्रधनधान्यगजाश्वरथ-गोमहिष्यादिसम्पदभिवृद्धिपूर्वकं निरतिशयानन्दब्रह्मपदप्राप्तिश्रीस-र्वफलाक्षय्यसुखकामः श्रुति-स्मृति-पुराणोक्तफलावाप्तिकामश्च धर्मार्थ-काममोक्षचतुर्विधपुरुषार्थसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं ग्रहयज्ञ-

वास्तुयागपूर्विकां स्वकृतशैलप्रासादप्रतिष्ठासहितां परिवारवाहनादियुतामेकरात्राधिवासनपक्षेण विष्ण्वादिमूर्त्तीनां लिङ्गस्य च अचलप्रतिष्ठां पञ्चाहे चतुरहे वा करिष्ये।'

## पञ्चदेवप्रतिष्ठासंकल्पः।

देशकालौ सङ्कीर्त्य 'मम सकुटुम्बस्य सपरिवारस्य पुत्रपौत्रधनधान्यदीर्घायुरारोग्यैश्वर्यादिवृद्धिसमृद्धयर्थं श्रुति-स्मृति-पुराणोक्तफलप्राप्तिपूर्वकं धर्मार्थकाममोक्षचतुर्विधपुरुषार्थसिद्धिद्वारा शाश्वतब्रह्मलोकप्राप्त्यर्थं गणपति-विष्णु-दुर्गा-सूर्य-शिवमूर्तीनां पञ्चदेवानां प्रतिष्ठामहं करिष्ये।'

## गृहवास्तुशान्तिसंकल्पः।

देशकालौ सङ्कीर्त्य 'मम सकुटुम्बस्य सपरिवारस्य सर्वारिष्टप्रशमनपूर्वकमायुरारोग्यपुत्र-पौत्र-धन-धान्य-गजाश्व-रथ-गो-महिष्यादिसम्पत्प्रवृद्धये एतद्गृहक्षेत्रावच्छिन्नभूम्यधिष्ठितदेवतोपरोधजनितोपसर्गनिवृत्तिपूर्वकगृहाधिष्ठितवास्तुपुरुषप्रीतये चास्मिन् नूतनगृहे करिष्यमाणनित्य-नैमित्तिक-काम्यकर्मणामस्य वास्तुनश्च शुभतासिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं गृहप्रवेशनिमित्तां सनवग्रहमखां गृहवास्तुशान्तिं करिष्ये।'

## नूतनगृहप्रवेशसंकल्पः।

देशकालौ सङ्कीर्त्य 'मम सकुटुम्बस्य सपरिवारस्य अस्मिन् नूतनगृहे चिरकालसुख-शान्तिनिवास-सर्वविध-रोग-शोक-विपत्तिनिवृत्तिपूर्वक-पुत्र-पौत्राद्यभिवृद्धिपूर्वक-धन-धान्य-सर्वविधसम्पत्प्रवृद्धयर्थं एतद्गृहनिर्माणे नानाविधजीवहिंसादोषपरिहारद्वारा एतद्गृहक्षेत्रावच्छिन्नभूम्यधिष्ठितदेवतोपरोधजनितोपसर्गनिवृत्ति-

पूर्वकवास्तुदेवतायाः शुभफलसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं गृहप्रवेशनिमित्तां सग्रहमखां वास्तुशान्ति गृहप्रवेशाख्यं कर्म चाहं करिष्ये ।'

## शिलान्यास-सङ्कल्पः ।

देशकालौ सङ्कीर्त्य 'अमुकोऽहं परमेश्वरप्रीत्यर्थं प्रारिप्स्यमानवास्तुनः शुभत्वसम्पत्तये निर्विघ्ननिर्माणसिद्धये च गृहनिर्माणाङ्गभूतं शिलान्यासं करिष्ये ।'

## राज्याभिषेकसङ्कल्पः ।

देशकालौ सङ्कीर्त्य 'ममामुकवर्मणः ममाधीनराज्याभिवृद्धिपूर्वकसर्वविधराज्यसुखभोगप्राप्त्यर्थं पुत्र-पौत्र-विपुल-धन-धान्य-दीर्घायुरारोग्यैश्वर्य-शक्ति-सामर्थ्य-विजयप्राप्ति-राज्यस्थैर्यफलप्राप्त्यर्थं प्रजानुरागलाभार्थं राष्ट्रान्तराक्रमणाद्युपद्रवनिरासार्थं राज्याभिषेकमहं करिष्ये ।'

## गायत्रीजपसङ्कल्पः ।

देशकालौ सङ्कीर्त्य 'ममेह जन्मनि जन्मान्तरे वा वाङ्मनःकायकृतानां सर्वेषां पापानामपनोदनार्थं श्रुति-स्मृति-पुराणोक्तफलप्राप्त्यर्थं धर्मार्थ-काममोक्षचतुर्विधपुरुषार्थसिद्धिद्वारा श्रीगायत्रीदेवताप्रीत्यर्थं अमुकसंख्याकं गायत्रीजपमहं करिष्ये ।'

## गायत्रीपुरश्चरणसङ्कल्पः ।

देशकालौ सङ्कीर्त्य 'मम इह जन्मनि जन्मान्तरे वा ज्ञाताज्ञातावस्थासम्भवानां सर्वेषां पातकोपपातकादीनां निरासपूर्वकं श्रुतिस्मृति-

पुराणोक्तफलप्राप्त्यर्थं धर्मार्थकाममोक्षचतुर्विध-पुरुषार्थसिद्धिद्वारा सर्वात्ममय्याः सर्वशक्त्याः सर्वावभासकतेजोमय्याः सच्चिदानन्दात्मकब्रह्म-विष्णु-महेश्वररूपायाः श्रीगायत्रीदेव्याः प्रीत्यर्थं गायत्र्याः चतुर्विंशतिलक्षात्मकं ( प्रत्यक्षरलक्षात्मकं ) पुरश्चरणं करिष्ये।'

## * महामृत्युञ्जयमन्त्र-जप-सङ्कल्प ।

देशकालौ सङ्कीर्त्य 'मम जन्मराशेः सकाशान्नामराशेः सकाशाद्वा जन्मलग्नाद् वर्षलग्नाद् गोचराद्वा ये केचित् चतुर्थाष्ट-महादशाद्यनिष्टस्थानस्थिताः क्रूरा ग्रहास्तैः सूचितं सूचयिष्यमाणं च यत् सर्वारिष्टं तद्विनाशार्थं दीर्घायुष्यसततारोग्यप्राप्त्यर्थं सर्वव्याधिनिवृत्तिपूर्वकम् अपमृत्युनिवारणद्वारा महामृत्युञ्जयदेवताप्रीत्यर्थं अमुकसंख्यापरिमितं महामृत्युञ्जयजपमहं करिष्ये ( ब्राह्मणद्वारा कारयिष्ये )।'

## सन्तानगोपालमन्त्र-जप-सङ्कल्पः ।

देशकालौ सङ्कीर्त्य 'मम सभार्यस्य इह जन्मनि जन्मान्तरे वा ज्ञाताज्ञातकृतानां बालघातविप्रधनहरणादिसर्वविधपापानां निवृत्तिपूर्वकं पूर्वजन्मार्जितानपत्यत्वादिदोषपापशमनार्थं मम भार्याया वन्ध्यात्वदोषनिरासपूर्वकं दीर्घायुष्यपुत्रप्राप्त्यर्थं श्रीकृष्णदेवताप्रीत्यर्थं च सन्तानगोपालमन्त्रस्य अमुकसंख्याकं जपं करिष्ये।'

---

* मम यजमानस्य वा जन्मकुण्डल्यनुसारमुत्पन्नस्य उत्पत्स्यमानस्याखिलारिष्टनिवृत्तिपूर्वकसर्वविधरोगोपशान्तये दीर्घायुष्यसततारोग्यप्राप्तये च महामृत्युञ्जयदेवताप्रीत्यर्थं महामृत्युञ्जयजपं करिष्ये ( करिष्यामि )।

## बगलामुखीमन्त्रजपसंकल्पः ।

देशकालौ सङ्कीर्त्य 'अमुकगोत्रः अमुकनामाहं अमुकगोत्रस्य अमुकनामकस्य सपरिषत्कस्य मम भारतीय-जनतन्त्रानुसारि-राष्ट्रपतिनियुक्ताधिकारिणः * मण्डलाधीशस्य (कलेक्टर) उप-मण्डलाधीशस्य ( असिस्टेन्ट अथवा डिप्टीकलेक्टर ) न्यायाधीशस्य ( मुन्सिफ-मेजिस्ट्रेट आदि ) प्राड्विवाकस्य ( जज ) उच्च-न्यायालयप्राड्विवाकस्य ( हाईकोर्टजज ) सर्वोच्चन्यायालयप्राड्-विवाकस्य ( सुप्रीम-कोर्टजज ) समक्षम् अभियुक्तस्य प्रतिद्वन्द्विनः पराजयार्थं मम विजयप्राप्त्यर्थं तदनुकूलतया मत्प्रतिद्वन्द्वि-वाक्कीलवाक्सम्मोहनार्थं न्यायाधीशस्य च मद्विजयानुकूल-निर्णयप्रदानपरवशीकरणार्थं श्रीबगलामुखीवरप्रसादसिद्धये 'ॐ ह्लीं बगलामुखि सर्वदुष्टानां वाचं मुखं स्तम्भय जिह्वां कीलय बुद्धिं विनाशय ह्लीं ॐ स्वाहा' इति मन्त्रेण जपं ( पुरश्चरणं ) करिष्ये ( ब्राह्मणद्वारा कारयिष्ये ) ।'

## रुद्राभिषेकसङ्कल्पः ।

देशकालौ सङ्कीर्त्य 'अमुकगोत्रः अमुकशर्मा सपत्नीकोऽहं मम सकुटुम्बस्य सपरिवारस्य आध्यात्मिक–आधिदैविक–आधि-भौतिक-त्रिविधताप- निवृत्त्यर्थम् आयुरारोग्यैश्वर्यादिवृद्धयर्थम् श्रुति-स्मृति-पुराणोक्तफलप्राप्तिपूर्वकं च धर्मार्थकाममोक्ष-चतुर्विध-पुरुषार्थसिद्धिद्वारा धर्मग्लान्यधर्माभ्युत्थान - निवृत्तिपूर्वकधर्म-संस्थापनार्थं च श्रीसाम्बसदाशिवप्रीतये एकादशब्राह्मणद्वारा रुद्राभिषेकाख्यं कर्म कारयिष्ये ।'

---

* जिस न्यायालयमें विवाद हो उस न्यायाधिपतिका नाम लेना चाहिये ।

## शतचण्डीसम्पुटितपाठसंकल्पः ।

देशकालौ सङ्कीर्त्य 'मम सकुटुम्बस्य सपरिवारस्य सर्वविध-रोग-सङ्कट-उपद्रव-राजभय-शत्रुभय-तस्करभय-भूत-प्रेत-पिशाचादि-भयनिवारणपूर्वकदीर्घायुर्विपुलधन-धान्य-पुत्र-पौत्रादि-सन्तति-वृद्ध्यर्थं व्यापारे उत्तरोत्तरलाभार्थं महाकाली-महालक्ष्मी-महासरस्वती स्वरूपायास्त्रिगुणात्मिकायाः भगवत्याः जगदम्बायाः श्रीदुर्गादेव्याः प्रीत्यर्थम् 'मार्कण्डेय उवाच। सावर्णिः सूर्यतनयो यो मनुः कथ्यतेऽष्टमः।' इत्याद्यारभ्य 'सावर्णिर्भविता मनुः।' इत्यन्तं 'सर्वाबाधाविनिर्मुक्तः' इति मन्त्रेण दुर्गासप्तशत्याः प्रतिमन्त्रं सम्पुटितपाठं तत्रादौ कवचार्गलाकीलकमाद्यन्तयोः अष्टोत्तरशत-नवार्णजपपूर्वकं क्रमेण रात्रिसूक्त-देवीसूक्ताभ्यां सहितस्य, अन्ते रहस्यत्रयस्य च पाठं दशब्राह्मणद्वारा सनवग्रहमखं शतचण्डीपाठं कारयिष्ये।'

## शतचण्डीपाठसंकल्पः ।

देशकालौ सङ्कीर्त्य 'मम सकुटुम्बस्य सपरिवारस्य जन्मकुण्डल्यां वर्षकुण्डल्यां मासकुण्डल्यां गोचरे चारिष्टस्थितानां ग्रहाणां सर्वा-रिष्टनिवृत्तिपूर्वकं ग्रहकृत-राजतन्त्रकृत-सर्वविधपीडा-निरासपूर्वकं दीर्घायुरारोग्यैश्वर्यादि-सर्वाभीष्ट-समृद्ध्यर्थं धर्मार्थकाममोक्ष-चतुर्वि-धपुरुषार्थसिद्धिद्वारा श्रीमहाकाली-महालक्ष्मी-महासरस्वतीदेवता-प्रीतये शापोद्धारपुरस्सरं कवचार्गलाकीलकपाठवेदतन्त्रोक्तरात्रिसूक्त-पाठ-देव्यथर्वशीर्षपाठ-न्यासविधिसहितनवार्णजप-सप्तशतीन्यास-ध्यानसहितचरित्र-सम्बन्धि-विनियोगन्यास-ध्यान-पूर्वकं च मार्कण्डेय-पुराणान्तर्गत-मार्कण्डेय उवाच। सावर्णिः सूर्यतनयो यो मनुः कथ्यतेऽष्टमः।' इत्याद्यारभ्य 'सावर्णिर्भविता मनुः' इत्यन्तं दुर्गासप्त-

शतीपाठं तदन्ते न्यासविधिसहितनवार्णमन्त्रजपं वेद-तन्त्रोक्तदेवी-सूक्तपाठं रहस्यत्रयपठनं शापोद्धारादिपूर्वकं करिष्ये।'

## दुर्गापाठसंकल्पः।

ॐ विष्णुर्विष्णुर्विष्णुः श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्तमानस्य अद्य श्रीब्रह्मणोऽह्नि द्वितीयपरार्धे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वन्तरे अष्टाविंशतितमे कलियुगे कलिप्रथमचरणे जम्बूद्वीपे भरतखण्डे भारतवर्षे आर्यावर्तैकदेशान्तर्गते अमुकक्षेत्रे महामाङ्गल्यप्रदमासोत्तमे मासे पुण्यपवित्रमासे अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकगोत्रोत्पन्नोऽहं अमुकशर्मा अमुकगोत्रोत्पन्नस्य अमुकशर्मणो[1] यजमानस्य प्रचलिताऽभियोगे प्रयागस्थराजकीयन्यायालये अमुकन्यायाधीशसकाशात् मनोऽभिलषितविजयप्राप्त्यर्थं श्रीजगदम्बायाः श्रीसंकटादेव्याः प्रीतये मार्कण्डेयपुराणान्तर्गत 'मार्कण्डेय उवाच' इत्याद्यारभ्य 'सावर्णिर्भविता मनुः' इत्यन्तम् 'सर्वाबाधासु घोरासु' इति मन्त्रेण प्रतिमन्त्रं सम्पुटितमादौ कवचार्गलाकीलकसहितमाद्यन्तयोः अष्टोत्तरशतनवार्णजपसहितमाद्यन्तयोः रात्रिसूक्तदेवीसूक्तसहितमन्ते च रहस्यत्रयसहितं सप्तशत्याः दुर्गाया एकावृत्तिपाठमहं करिष्यामि[2]।

---

१—यजमान ब्राह्मण हो, तो उसके नामके अन्त में 'शर्मणः', क्षत्रिय हो तो 'वर्मणः', वैश्य हो तो 'गुप्तस्य' और शूद्र हो तो 'दासस्य' ऐसा सर्वत्र ऊह करना चाहिये।

२—यजमानके लिये पाठ करते समय 'करिष्यामि' और अपने लिये पाठ करते समय 'करिष्ये' ऐसा कहना चाहिये। ब्राह्मणद्वारा पाठ कराना हो तो 'कारयिष्ये' कहना चाहिये।

## श्रीमद्भागवतसप्ताह–कथाश्रवण-संकल्पः ।

देशकालौ सङ्कीर्त्य 'अमुकगोत्रः अमुकशर्माहं मम कायिक-वाचिक-मानसिक-सांसर्गिक–चतुर्विधपापक्षयपूर्वकं आयुरारोग्यैश्वर्यादिवृद्ध्यर्थं इह नित्यकल्याणप्राप्तिपुरस्सरं अमुत्र वैकुण्ठलोकप्राप्त्यर्थं श्रुति-स्मृति-पुराणोक्तफलप्राप्तिपूर्वकं धर्मार्थकाममोक्ष-चतुर्विधपुरुषार्थसिद्धिद्वारा श्रीकृष्णदेवताप्रीत्यर्थं[1] चतुर्विधपुरुषार्थ-प्रतिपादकस्य साक्षाद्भगवद्रूपस्य श्रीमद्भागवतस्य सप्ताहविधिना श्रीमद्भागवतसप्ताहकथा-श्रवणमहं करिष्ये ।'

## हरिवंश-पुराणकथाश्रवण -सङ्कल्पः ।

देशकालौ सङ्कीर्त्य 'अमुकगोत्रः अमुकशर्मा सपत्नीकोऽहं मम सभार्यस्य इह जन्मनि जन्मान्तरे वा कृतेन नित्य-नैमित्तिक-कर्मदोषेण परदोषेण गुरुद्वेषेण माता-पितृ-परिवारदोषेण वान्येन वा कर्मणोत्पन्न-चतुर्विधवन्ध्यात्वान्यतमवन्ध्यात्वदोषनिरासेन तथा मम धर्मपत्न्याः कुक्षिदोष ज्ञाताज्ञातान्यदुष्टस्त्रीचैलाञ्चल-स्पर्शदोषतदेकांशेन शयनादिदोषजनितसमस्तसन्ततिप्रतिबन्धक-दोषपरिहारपूर्वकं दीर्घजीविसन्ततिप्राप्त्यर्थं वंशपरम्पराविच्छेदार्थं समस्तपापक्षयपूर्वकं सालोक्य-सामीप्य-सारूप्य-सायुज्यप्राप्त्यर्थं धर्मार्थकाममोक्ष-चतुर्विधपुरुषार्थसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं नवाहविधिना हरिवंशपुराणकथाश्रवणमहं करिष्ये ।'

---

१—किसी व्यक्तिके पिशाचत्वादिसे मुक्ति दिलानेके उद्देश्यसे कथाश्रवण करना हो, तो "मृतस्य पिशाचादिदुर्योनि-मोचनपुरस्सरं वैकुण्ठ-प्राप्तये" ऐसा कहना चाहिये ।

## वाल्मीकीयरामायणस्य नवाह-पाठसङ्कल्पः ।

देशकालौ सङ्कीर्त्य 'मम सकुटुम्बस्य सपरिवारस्य इह जन्मनि जन्मान्तरे वा कायिक-वाचिक-मानसिक-त्रिविधपापक्षयपूर्वकं सर्वविधारिष्टनिवृत्तिद्वारा सर्वाभीष्टसिद्धये धर्मार्थकाममोक्ष-चतुर्विधपुरुषार्थसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं महर्षिवाल्मीकि-प्रणीतचतुर्विंशतिसहस्रश्लोकात्मकस्य कलिमलशकलीकरणकुशल-पतितपावनश्रीरामचरितप्रतिपादकस्य वाल्मीकीयरामायणस्य नवाह-विधिना पाठमहं करिष्ये ।'

## देवीभागवतस्य नवाह-पाठसङ्कल्पः ।

देशकालौ सङ्कीर्त्य 'ममात्मनः कायिक-वाचिक-मानसिक-सांसर्गिकचतुर्विधपापक्षयपूर्वकं पुत्र-पौत्र-धन-धान्यैश्वर्यदीर्घायुरारो-ग्यादिवृद्ध्यर्थं च श्रुति-स्मृति-पुराणोक्तफलप्राप्तिपूर्वकं धर्मार्थ-काममोक्षचतुर्विधपुरुषार्थसिद्धिद्वारा श्रीभगवत्याः जगदम्बादेव्याः प्रीत्यर्थं नवाहविधिना ( अद्यारभ्य यथाकालपर्यन्तं वा ) श्री-मद्देवीभागवतमहापुराणपारायणं करिष्ये ( श्रीमद्देवीभागवतस्य नवाहविधिना कथाश्रवणमहं करिष्ये ) ।'

## तुलसीदासकृतरामायणीयसुन्दरकाण्डस्य पाठसङ्कल्पः ।

विष्णुर्विष्णुर्विष्णुः श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्तमानस्य अद्य श्रीब्रह्मणोऽह्नि द्वितीयपरार्द्धे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वन्तरे अष्टाविंशतितमे कलियुगे कलिप्रथमचरणे जम्बू-द्वीपे भरतखण्डे भारतवर्षे आर्यावर्तैकदेशान्तर्गत-अमुकक्षेत्रे (वारा-णसीक्षेत्रे) मासानां मासोत्तमे मासे अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकगोत्रोत्पन्नस्य अमुकशर्मणो यजमानस्य प्रचलि-ताभियोगे राजकीयन्यायालये न्यायाधीशसकाशात् मनोऽभिलषित-

विजयप्राप्त्यर्थं श्रीहनुमद्देवताप्रीत्यर्थं तुलसीदासकृतरामायणीय-सुन्दरकाण्डस्य—

१—महावीर विनवौं हनुमाना० । २—कौन सुकाज कठिन जगमाहीं० । ३—बन्दउँ पवनकुमार खलबनपावक ज्ञान० ।

—एभिर्मन्त्रैः सम्पुटितपाठमहं करिष्यामि ।

## वाल्मीकिकृतरामायणीयसुन्दरकाण्डस्य पाठसङ्कल्पः ।

देशकालौ सङ्कीर्त्य 'अमुकगोत्रोत्पन्नस्य अमुकनामकस्य यजमानस्य प्रचलिताभियोगे राजकीयन्यायालये न्यायाधीशसकाशात् मनोऽभिलषितविजयप्राप्त्यर्थं श्रीहनुमद्देवताप्रीत्यर्थं वाल्मीकीयरामायणान्तर्गतसुन्दरकाण्डस्य सप्तसर्गात्मकं पाठं प्रतिदिवसं करिष्यामि ।'

## जन्मदिन (वर्धापन) पूजनसङ्कल्पः ।

देशकालौ सङ्कीर्त्य 'मम ( ममास्य कुमारस्य ) दीर्घायुरारोग्यैश्वर्यादिवृद्ध्यर्थं श्रुति-स्मृति-पुराणोक्तफलप्राप्त्यर्थं धर्मार्थकाममोक्षचतुर्विधपुरुषार्थसिद्धिद्वारा श्रीमार्कण्डेयदेवताप्रीत्यर्थं वर्धापनाख्यं कर्म करिष्ये ।'

## लक्ष्मीपूजनसङ्कल्पः ।

देशकालौ सङ्कीर्त्य 'मम सकुटुम्बस्य सपरिवारस्य कायिक-वाचिक-मानसिक-सांसर्गिकचतुर्विधपापक्षयपूर्वकं सर्वापच्छान्ति-पूर्वकं पुत्र-पौत्र-धन-धान्य-समृद्धि-दीर्घायुरारोग्यैश्वर्याद्यभिवृद्धिद्वारा मम भवने स्थिरलक्ष्मीनिवासार्थं सर्वाभीष्टसंसिद्ध्यर्थं सर्वविधव्यापारे उत्तरोत्तरलाभार्थं सुवर्ण-रजत-मणि-माणिक्यसम्पदभिवृद्ध्यर्थं महालक्ष्मीदेवताप्रीत्यर्थं महालक्ष्म्याः पूजनं करिष्ये ।'

## पञ्चक्रोशीयात्रा-संकल्पः ।

देशकालौ सङ्कीर्त्य 'मम कायिक-वाचिक-मानसिक-सांसर्गिक-चतुर्विधपापक्षयपूर्वकं पित्रादीनां परलोके नित्यसुखप्राप्त्यर्थं धर्मार्थकाममोक्ष - चतुर्विध - पुरुषार्थ-सिद्धिद्वारा काशीविश्वनाथ-देवताप्रीत्यर्थं यथासम्भवम् एकभुक्तब्रह्मचर्यादिनियमपालनपूर्वकं तत्तद्देवतावन्दनपूर्वकं पञ्चक्रोशात्मक - काशीक्षेत्र - प्रदक्षिणां करिष्ये ।'

## संस्कृत-विद्यालयस्थापन-संकल्पः ।

देशकालौ सङ्कीर्त्य 'मम सकुटुम्बस्य सपरिवारस्य ऐहिकामुष्मिक-समस्त-शुभफलप्राप्तिपूर्वकं भारतवर्षवास्तव्यानामध्ययनशीलानां द्विजातिवर्गाणां श्रुति-स्मृति-पुराणोपपुराणादीनां षडङ्गानां धार्मिकग्रन्थानां च अध्ययनाध्यापनार्थं अस्मद्वंशपरम्परायां निरन्तर-विद्वत्सन्तानलाभार्थं धर्मार्थ - काम-मोक्ष - चतुर्विध-पुरुषार्थ - सिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं पुण्यकालेऽस्मिन् अमुक-नामकसंस्कृत-विद्यालयस्थापनं करिष्ये ।'

## पुस्तकालयस्थापन-संकल्पः ।

देशकालौ सङ्कीर्त्य 'मम सकुटुम्बस्य सपरिवारस्य श्रुति-स्मृति-पुराणोक्त-फलप्राप्तिपूर्वकं विद्यानुरागिणां सर्वेषां सरस्वत्युपासकानां भारतवर्षीयाणामन्येषां विदेशीयानाञ्च स्त्री-पुंसानामध्ययनार्थं सनातन-धर्मप्रतिपादकानां श्रुति-स्मृति-पुराणादीनां षडङ्गानां धार्मिकग्रन्थानामन्येषां ग्रन्थानां सर्वासां विद्यानाञ्च अध्ययनार्थं मद्वंशपरम्परायां निरन्तरविद्वत्सन्तानावाप्त्यर्थं धर्मार्थकाममोक्ष-चतुर्विधपुरुषार्थसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं अमुकनामकपुस्तकालयस्थापनं करिष्ये ।'

## वृक्षारोपण-संकल्पः ।

देशकालौ सङ्कीर्त्य 'मम सकुटुम्बस्य सपरिवारस्य सर्वविध-पापक्षयपूर्वकं दशपूर्वान् दशापरानात्मना सहैकविंशतिपुरुषानुद्धर्तु-कामो वृक्षस्य पत्रसमवर्षपर्यन्तं वैकुण्ठलोकप्राप्त्यर्थं पान्थानां मानवानां तीर्थयात्रिणां आतपसन्तप्यमानपशूनाञ्चाप्यायनार्थं धर्मार्थकाममोक्षचतुर्विधपुरुषार्थसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थम् अमुकवृक्षारोपणं करिष्ये ।'

## कूपनिर्माण-संकल्पः ।

देशकालौ सङ्कीर्त्य 'मम सकुटुम्बस्य सपरिवारस्य सर्वविध-पापक्षयपूर्वकं धर्मार्थकाममोक्षचतुर्विध-पुरुषार्थसिद्धिद्वारा सर्वेषां प्राणिनाम्, विशेषतः सनातनधर्मानुसारिहिन्दूजातेर्ब्राह्मण-क्षत्रिय-वैश्य-सच्छूद्राणां शीतलजलपानार्थं मद्वंशे मृतानां क्षुत्पिपासा-बाधानिवृत्तये च वरुणदेवताप्रीत्यर्थं कूपनिर्माणमहं करिष्ये ।'

## कूपोत्सर्ग-संकल्पः ।

देशकालौ संकीर्त्य 'मम ज्ञाताज्ञात-सर्वपापक्षयपूर्वकं सर्वाभीष्ट-फलप्राप्तये मद्वंशे मृतानां क्षुत्पिपासानिवृत्तिपूर्वकमाप्याय-नाय च विष्णुपदप्राप्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थं कूपोत्सर्गम् ( कूपप्रतिष्ठां ) अहं करिष्ये ।'

## वृषोत्सर्ग-संकल्पः ।

देशकालौ सङ्कीर्त्य 'ममेह जन्मनि जन्मान्तरे च ज्ञाताज्ञात-कायिक-वाचिक-मानसिक-सांसर्गिक - चतुर्विधपापक्षयपूर्वकं एक-विंशतिकुलोद्धरणपूर्वकं समस्तपितॄणां च श्रीरुद्रलोकप्राप्त्यर्थं श्रीरुद्रदेवताप्रीत्यर्थं वृषोत्सर्गमहं करिष्ये ।'

## तडागोत्सर्ग-सङ्कल्पः ।

देशकालौ सङ्कीर्त्य 'मम ज्ञाताज्ञातसर्वविधमहापापोपपापानां निवृत्तिपूर्वकं सर्वयज्ञ - सर्वतीर्थ - सर्वदान - सर्वतपः-सर्वपुण्यफल-प्राप्त्यर्थं मातृतः पितृतश्च एकविंशतिकुलोद्धरणपूर्वकविष्णुलोक-प्राप्तिद्वारा सर्वाभीष्टसंसिद्ध्यर्थं तडागस्य निर्माणसमये अनेक-विधानां जीव-जन्तूनां वधजन्यदोषपरिहारपूर्वकं विष्णुलोक-प्राप्त्यर्थं श्रीपरमेश्वरप्रीत्यर्थं इमं तडाग-जलाशयं वरुणदैवतं सर्वेषां प्राणिनां स्नानपानादिनाऽऽप्यायनार्थं तडागोत्सर्गं ( तडाग-प्रतिष्ठाम् ) अहं करिष्ये ।'

## मूलशान्ति-संकल्पः ।

देशकालौ सङ्कीर्त्य 'ममास्य कुमारस्य कुमार्या वा [1]अमुक-चरणादिजननसूचितपित्राद्यरिष्टनिवृत्तये दीर्घायुःप्राप्त्यर्थं श्रीपरमेश्वरप्रीत्यर्थं च गोमुखप्रसवपूर्वकम् अश्विनी-आश्लेषा-मघा-ज्येष्ठा-रेवती-नक्षत्राणां (अथवाऽमुकनक्षत्रस्य) शान्तिमहं करिष्ये ।'

## गोमुखप्रसवशान्ति-संकल्पः ।

देशकालौ सङ्कीर्त्य 'अस्य बालकस्य अमुकनक्षत्रोत्पन्नस्य तन्नक्षत्रजनननिमित्तसर्वारिष्टविनाशाय पित्रादीनां सर्वारिष्ट-निवृत्तये दीर्घायुरारोग्याभिवृद्धये समस्तदुःखनिवारणाय श्रीपरमेश्वरप्रीत्यर्थं च गोमुखप्रसवशान्ति करिष्ये ।'

---

१—(क) मूलप्रथमचरण-जनननिमित्तपित्राद्यरिष्टनिवृत्तिद्वारा ।
(ख) मूलद्वितीयचरणजनननिमित्तपित्ररिष्टनिवृत्तिद्वारा ।
(ग) मूलतृतीयचरणजनननिमित्तजनन्यरिष्टनिवृत्तिद्वारा ।
(घ) मूलचतुर्थचरणजनननिमित्तकुलद्वयारिष्टदूरीकरणद्वारा ।

## महामारीशान्ति-संकल्पः ।

देशकालौ सङ्कीर्त्य 'एतन्नगर-ग्राम-निवासिनां सर्वेषां प्राणिनां शरीरेषु उत्पन्नोत्पत्स्यमान-विविधरोगोपसर्गाणां शीघ्रोपशमन-पूर्वकं सर्वेषां प्राणिनां दीर्घायुररोगतासिद्ध्यर्थं अकालमृत्यो-र्निवारणार्थं श्रीमहामृत्युञ्जयदेवताप्रीत्यर्थम् अखण्डरुद्राभिषेकं श्रीदुर्गादेवताप्रीत्यर्थं अखण्ड-दुर्गापाठं सनवग्रहं महामारीशान्ति-कर्माहं करिष्ये ।'

## दत्तकपुत्रग्रहण-संकल्पः ।

पुत्रग्रहणकर्तुः सङ्कल्पः—

देशकालौ सङ्कीर्त्य 'मम अप्रजस्त्वदोषनिवृत्तिद्वारा पुन्नामनर-कोत्तरणार्थं आचन्द्रार्कं वंशानुवृत्तिसिद्धिद्वारा अचलविमलकीर्त्य-भिवृद्ध्यर्थं पैतृकऋणापाकरणार्थं पितॄणां नित्यनिरतिशय-शा-श्वतपुण्यलोक-निवासानन्त-पार्विकनैत्यापतृप्तिप्राप्तये स्वधर्मपत्नी-जातौरसपुत्रतासमत्वसिद्धये धर्मार्थ-काममोक्ष-चतुर्विध-पुरुषार्थ-सिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं शौनकोक्तविधिना पुत्रप्रतिग्रहं करिष्ये ।'

पुत्रप्रदातुः संकल्पः—

(क) देशकालौ सङ्कीर्त्य 'ममात्मसन्तुष्टये तव वंशाभिवृ-द्धये च श्रीपरमेश्वरप्रीत्यर्थं स्वकीयौरसपुत्रदानमहं करिष्ये ।'

(ख) देशकालौ सङ्कीर्त्य 'इमं पुत्रं तव पैतृकऋणापाकरणार्थं आत्मनश्च मुक्तये श्रीपरमेश्वरप्रीत्यर्थं तुभ्यमहं सम्प्रददे ।'

## एकादशीव्रतोद्यापन-संकल्पः ।

देशकालौ संकीर्त्य 'मम कायिक-वाचिक-मानसिक-सांसर्गिक-चतुर्विधपापक्षयपूर्वकं पुत्र-पौत्र-धन-धान्य-दीर्घायुरारोग्यैश्वर्याद्यभिवृद्धिपूर्वकं ज्ञान-भक्ति-वैराग्यादिदैवीसम्पत्समृद्ध्यर्थं धर्मार्थ-काममोक्षचतुर्विधपुरुषार्थ-सिद्धिद्वारा वैकुण्ठलोकप्राप्तये श्रीकृष्ण-देवताप्रीत्यर्थं च कृतस्यैकादशीव्रतस्य साङ्गतासिद्धये तत्सम्पूर्णफल-प्राप्तये च एकादशीव्रतोद्यापनं करिष्ये ।'

## कार्तिकमासव्रतोद्यापन-संकल्पः ।

देशकालौ संकीर्त्य 'मम इह जन्मनि जन्मान्तरे वा कृतानां समेषां पापानामपनोदनपूर्वकैहिकामुष्मिक-सर्वविधसुखभोगप्राप्ति-द्वारा परमेश्वरप्रीत्यर्थं प्रतिवर्षं मासपर्यन्तं कृतस्य (आचरितस्य आचरिष्यमाणस्य च) प्रातःस्नान-श्रीराधादामोदरपूजन-कथा-श्रवणादिरूपव्रतस्य साङ्गतासिद्धये तत्सम्पूर्णफलप्राप्तये च कार्तिकमासव्रतोद्यापनं करिष्ये ।'

## शिवरात्रिव्रतोद्यापन-सांकल्पः ।

देशकालौ सङ्कीर्त्य 'मम सर्वविधपापक्षयपूर्वकं पुत्र-पौत्र-धन-धान्य-दीर्घायुरारोग्यैश्वर्याद्यभिवृद्धिपूर्वकं शिवलोकप्राप्तिद्वारा श्रीसाम्बसदाशिवप्रीत्यर्थं कृतस्य शिवरात्रिव्रतस्य साङ्गता-सिद्ध्यर्थं तत्सम्पूर्णफलप्राप्त्यर्थं च शिवरात्रिव्रतोद्यापनं करिष्ये ।'

## प्रदोषव्रतोद्यापन-सांकल्पः ।

देशकालौ सङ्कीर्त्य 'मम कायिक-वाचिक-मानसिक-सांसर्गिक-चतुर्विधपापक्षयपूर्वकं दीर्घायुरारोग्यैश्वर्याद्यभिवृद्धिद्वारा श्रीसाम्ब-

सदाशिवप्रीत्यर्थं आचरितस्य आचर्यमाणस्य आचरिष्यमाणस्य च प्रदोषव्रतस्य साङ्गतासिद्ध्यर्थं तत्सम्पूर्णफलप्राप्त्यर्थं च प्रदोषव्रतोद्यापनं करिष्ये ।'

## रविवारव्रतोद्यापन-संकल्पः ।

देशकालौ सङ्कीर्त्य 'मम शारीरिकसमस्तरोगनिवृत्तिपूर्वकं पुत्र-पौत्र-धन-धान्यादिसकलाभीष्टसिद्धिद्वारा श्रीसूर्यनारायणदेवता-प्रीत्यर्थं कृतस्य रविवारव्रतस्य साङ्गतासिद्ध्यर्थं तत्सपूर्णफल-प्राप्तये च रविवारव्रतोद्यापनं करिष्ये ।'

## हरितालिकाव्रतोद्यापन-संकल्पः ।

देशकालौ सङ्कीर्त्य 'मम भार्यायाः सर्वविधपापक्षयपूर्वकं अखण्डसौभाग्य-पुत्र पौत्र-धन-धान्यादि - विविधसुख-भोगप्राप्तिपूर्वकं शिवलोकप्राप्तिद्वारा आचरितस्य आचर्यमाणस्य आचरिष्यमाणस्य च हरितालिकाव्रतस्य साङ्गतासिद्ध्यर्थं तत्सम्पूर्णफलप्राप्त्यर्थं श्रीसाम्बसदाशिवप्रीत्यर्थं च हरितालिकाव्रतोद्यापनं करिष्ये ।'

## ऋषिपञ्चमीव्रतोद्यापन-संकल्पः ।

देशकालौ सङ्कीर्त्य 'मम ज्ञानतः अज्ञानतो वा रजस्वलावस्थायां कृतसम्पर्कजनित-दुर्योनित्वदोष-परिहारद्वारा शुभ-फलप्राप्त्यर्थं कृतस्य ऋषिपञ्चमीव्रतस्य साङ्गतासिद्ध्यर्थं तत्सम्पूर्णफलप्राप्त्यर्थं अरुन्धतीसहित कश्यपादि-सप्तर्षिप्रीत्यर्थं च ऋषिपञ्चमीव्रतोद्यापनं करिष्ये ।'

## अनन्तव्रतोद्यापन-सङ्कल्पः ।

देशकालौ सङ्कीर्त्य 'मम सर्वविधपापक्षयपूर्वकं पुत्र-पौत्र-धन-धान्य-दीर्घायुरारोग्यैश्वर्यादि-प्राप्तिपूर्वकं वैकुण्ठलोकप्राप्तिद्वारा

श्रीमदनन्तस्य प्रीत्यर्थं मया कृतस्य अनन्तचतुर्दशीव्रतस्य साङ्गता-सिद्ध्यर्थं तत्सम्पूर्णफलप्राप्त्यर्थञ्च अनन्तचतुर्दशीव्रतोद्यापनं करिष्ये ।'

## गोदान-सङ्कल्पः ।

देशकालौ संकीर्त्य 'ममानेकजन्मार्जितज्ञाताज्ञात-सर्वविधपाप-निवृत्तिपूर्वकं पुत्र-पौत्र-धन-धान्य-दीर्घायुरारोग्यैश्वर्यादि-विविध-सुखप्राप्तये एकविंशति-कुलोद्धरणपूर्वकं पितॄणां च निरतिशया-नन्दप्राप्त्यर्थं श्रुति - स्मृति - पुराणोक्तफलप्राप्त्यर्थं धर्मार्थ-काममोक्षचतुर्विधपुरुषार्थसिद्धिद्वारा गोरोमतुल्यसंवत्सरावधि-वैकुण्ठलोकप्राप्त्यर्थं इमां सवत्सां गां सुपूजितां सालङ्कारां रुद्र-देवताममुकगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।'

## वैतरणी-गोदान-सङ्कल्पः ।

देशकालौ सङ्कीर्त्य 'मम सकुटुम्बस्य सपरिवारस्य ज्ञाताज्ञात-सर्वविधपापक्षयपूर्वकं आजन्मोपार्जितैहिकामुष्मिकदेवर्षिपितृ-मनुष्याणां समस्तऋणपातकच्छेदनार्थं मम सुखेन प्राणोत्क्रमणे प्रतिबन्धकोक्तनिष्कृत्यननुष्ठानजनितसकलपापक्षयद्वारा सुखेन प्राणोत्क्रमणसिद्ध्यर्थं तथा मम मृत्योरनन्तरं यमद्वारा स्थापित-वैतरण्याख्यनद्याः सुखपूर्वकमुत्तारणार्थं च धर्मार्थकाममोक्ष-चतु-र्विधपुरुषार्थसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं इमां वैतरणीसंज्ञिकां धेनुं सालङ्कारां सवत्सां च यथानामगोत्राय ब्राह्मणाय तुभ्यमहं सम्प्रददे ।'

## प्रायश्चित्त-धेनुदान-सङ्कल्पः ।

देशकालौ सङ्कीर्त्य 'मम इह जन्मनि जन्मान्तरे वा ज्ञाताज्ञात-सर्वविधपापक्षयपूर्वक — धर्मार्थकाममोक्षचतुर्विधपुरुषार्थसिद्धिद्वारा

श्रीपरमेश्वरप्रीत्यर्थं प्रायश्चित्तत्वेन इमां प्रायश्चित्तधेनुं (इदं प्रायश्चित्तधेनुनिष्क्रयभूतं द्रव्यं रजतंचन्द्रदैवतं) सवत्सां सालङ्कारां यथानामगोत्राय ब्राह्मणाय तुभ्यमहं सम्प्रददे।'

## वृषदान-सङ्कल्पः।

देशकालौ सङ्कीर्त्य 'मम सप्तजन्मकृतकायिक-वाचिक-मानसिक-त्रिविधपापक्षयपूर्वकं वृषरोमसमसंख्यवर्षसहस्रावधिगोलोकवासोत्तरमिह लोके सत्र-याजित्व-ब्राह्मणपूजितत्वप्राप्तिकामो वा शिव-सायुज्यप्राप्तये परमेश्वरप्रीत्यर्थं इमं वृषं यथाशक्त्यलङ्कृतं रुद्रदेवताकं (इदं वृषनिष्क्रयभूतं द्रव्यं) यथानामगोत्राय ब्राह्मणाय तुभ्यमहं सम्प्रददे।'

## सुवर्णदान-सङ्कल्पः।

देशकालौ सङ्कीर्त्य 'मम ज्ञाताज्ञातसर्वविधपापक्षयपूर्वकं पुत्र-पौत्र-धन-धान्य-दीर्घायुरारोग्यैश्वर्यप्राप्त्यर्थं सुवर्णमय-हिमाचलदान-समफलप्राप्त्यर्थं च श्रुति-स्मृति-पुराणोक्तफलप्राप्त्यर्थं धर्मार्थकाम-मोक्षचतुर्विधपुरुषार्थसिद्धिद्वारा श्रीसूर्यान्तर्यामिजनार्दनदेवता-प्रीत्यर्थं इदं सुवर्णमग्निदैवतं सदक्षिणं यथानामगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे।'

## रजतदान-सङ्कल्पः।

देशकालौ सङ्कीर्त्य 'मम कायिक-वाचिक-मानसिक-सांसर्गिक-सर्वविधपापक्षयपूर्वकं दीर्घायुरारोग्यैश्वर्यादिवृद्धिपूर्वकं श्रुतिस्मृति-पुराणोक्तफलप्राप्त्यर्थं धर्मार्थकाममोक्षचतुर्विधपुरुषार्थसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं इदं रजतं चन्द्रदैवतं यथानामगोत्रायामुक-शर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे।'

## भूमिदान-सङ्कल्पः ।

देशकालौ सङ्कीर्त्य 'मम सर्वविधपापक्षयपूर्वक-दीर्घायुरारोग्यैश्वर्यादिप्राप्त्यर्थं (षट्सहस्रवर्षपरिमितवैकुण्ठलोकनिवासार्थं च) धर्मार्थकाममोक्षचतुर्विधपुरुषार्थसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं इमां भूमिं श्रीभूदेवीवल्लभ-विष्णुदैवतां अमुकगोत्राय अमुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे।'

## गृहदान-सङ्कल्पः ।

देशकालौ सङ्कीर्त्य 'मम सकुटुम्बस्य सपरिवारस्य सर्वविधपापक्षयपूर्वक-धन-धान्य-दीर्घायुरारोग्यैश्वर्यादिसम्पत्प्रवृद्ध्यर्थं धर्मार्थकाममोक्षचतुर्विधपुरुषार्थसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं शय्या-वस्त्राभूषण-रजत-ताम्रादिपात्र-सर्वधान्य-आज्य-मिष्टान्नादि-सर्वोपस्करसहितं इदं गृहं विश्वकर्मदैवतं सर्वदैवत्यं च अमुकगोत्रायामुकशर्मणे ब्राह्मणाय सकुटुम्बनिवासाय तुभ्यमहं सम्प्रददे।'

## रजतपात्रदान-सङ्कल्पः ।

देशकालौ सङ्कीर्त्य 'मम ज्ञाताज्ञातसर्वविधपापक्षयपूर्वकं दीर्घायुरारोग्यैश्वर्यादिप्राप्त्यर्थं च इदं ताम्रं राजतं वा पात्रं (इमानि ताम्राणि राजतानि-पात्राणि वा) अमुकगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे।'

## वस्त्रदान-सङ्कल्पः ।

देशकालौ सङ्कीर्त्य 'मम सर्वविधपापक्षयपूर्वकं समस्तपुण्यप्राप्त्यर्थं लज्जाशीतबाधानिवारणार्थं च श्रीपरमेश्वरप्रीत्यर्थं इदं वस्त्रं (इमानि वस्त्राणि) बृहस्पतिदैवतं सदक्षिणाकं अमुकगोत्राय अमुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे।'

## पुस्तकदान-सङ्कल्पः ।

देशकालौ सङ्कीर्त्य 'सर्वविधपापक्षयपूर्वकगोसहस्रदानसमफल-प्राप्त्यर्थं पुस्तकाभ्यन्तरमुद्रिताक्षरसंख्यापरिमित-ब्रह्मलोक-निवासार्थं मम वंशे विद्वत्सन्तानाविच्छेदार्थं धर्मार्थकाममोक्ष-चतुर्विध-पुरुषार्थसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थमिदं पुस्तकं ( इमानि पुस्तकानि ) सरस्वतीदैवतं अमुकगोत्राय अमुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।'

## शय्यादान-सङ्कल्पः ।

देशकालौ सङ्कीर्त्य 'मम ज्ञाताज्ञात-कायिक-वाचिक-मानसिक-सांसर्गिकसर्वविध-पापनिवृत्तिपूर्वकं पुत्र-पौत्र-धन-धान्य-दीर्घायुरारोग्यैश्वर्यादिसमृद्धयर्थं श्रुति-स्मृति-पुराणोक्तफलप्राप्त्यर्थं धर्मार्थकाममोक्ष-चतुर्विध-पुरुषार्थ-सिद्धिद्वारा वैकुण्ठलोक-प्राप्तिकामनया घृत-अन्न-वस्त्र-च्छत्त्रोपानत् सुवर्णाभूषण-रजतपात्र-ताम्र पित्तलादिपात्र-सौभाग्यद्रव्यादि-नानाविधोपस्करसहितां शिव-पार्वती-प्रतिमायुतां शय्यां रुद्रदैवतां ( मृतोद्देशेन चेत्—मृतस्य परलोके सुखशय्याप्राप्तये ) यथानामगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।'

## नवग्रहदान-सङ्कल्पः ।

देशकालौ सङ्कीर्त्य 'अमुकगोत्रः अमुकशर्मा सपत्नीकोऽहं मम इह जन्मनि जन्मान्तरे वा वाङ्मनःकायकृतानां सर्वेषां ज्ञाताज्ञात-पापानामपनोदपूर्वकं आधि-व्याधि-जरा-मृत्यु-भय-शोक-निवृत्त्यर्थं आध्यात्मिक-आधिदैविक-आधिभौतिक-त्रिविध-तापशान्त्यर्थं जन्म-कुण्डल्यां वर्षकुण्डल्यां मासकुण्डल्यां गोचरे चारिष्टस्थितानामादित्यादिनवग्रहाणामशुभफलनिरासपूर्वकं लग्नस्थमन्वार्कपातालस्थ-

भौममिथुनस्याऽजनवमस्याशिखि - गोचराष्टजीवग्रहजन्य-जायमान-जनिष्यमाण-सकलारिष्ट-अपमृत्यु-निराकरणपूर्वक - दीर्घायुररोगता-प्राप्त्यर्थं च धर्मार्थ-काममोक्ष - चतुर्विधपुरुषार्थसिद्धिद्वारा श्रीसूर्यादिनवग्रहदेवताप्रीतये नवग्रहवस्तुदानानि ब्राह्मणाय (ब्राह्मणेभ्यः युष्मभ्यं ) तुभ्यमहं सम्प्रददे ।'

## तुलादान-सङ्कल्पः ।

देशकालौ सङ्कीर्त्य 'मम जन्मराशेः गोचरे विंशोत्तरीमहादशायां अन्तर्दशायां चारिष्टस्थानस्थितसूर्यादिग्रहजन्य - सूचयिष्यमाण-सर्वारिष्टनिवृत्तिपूर्वकदीर्घायुरारोग्यैश्वर्याद्यभिवृद्ध्यर्थं सूर्यादिग्र-हान्वित - महामृत्युञ्जयदेवताप्रीत्यर्थं अमुकपर्वनिमित्तं नानाविध-द्रव्येण तुलापुरुषदानं ब्राह्मणाय तुभ्यमहं सम्प्रददे ।'

## तिलपात्रदान-सङ्कल्पः ।

देशकालौ सङ्कीर्त्य 'मम समस्तपापक्षयपूर्वकं सर्वविध-मनोरथसिद्ध्यर्थं श्रीविष्णुदेवताप्रीत्यर्थं इदं तिलपूरितताम्रपात्रं ससुवर्णं सदक्षिणं यथानामगोत्राय अमुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।'

## तिल-मोदकदान-सङ्कल्पः ।

देशकालौ सङ्कीर्त्य 'मम सकुटुम्बस्य सपरिवारस्य सर्वविध-पापक्षयपूर्वकं आयुरारोग्यैश्वर्यादिसमस्तसम्पत्तिप्राप्त्यर्थं धर्मार्थ-काममोक्ष-चतुर्विधपुरुषार्थ-सिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं ससुवर्णं सदक्षिणाकं यथासंख्याकं तिलमोदकं यथानामगोत्राय ब्राह्मणाय तुभ्यमहं सम्प्रददे ।'

## चणकमोदकदान-सङ्कल्पः ।

देशकालौ सङ्कीर्त्य 'मम सकुटुम्बस्य सपरिवारस्य दीर्घायुरारोग्यैश्वर्यादिप्राप्तिपूर्वकं परलोकस्थानां समस्तपितॄणां क्षुधानिवृत्तये धर्मार्थकाममोक्ष-चतुर्विधपुरुषार्थसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं इमान् चणकमोदकान् ( सेटकपरिमितान् अर्धसेटकपरिमितान् षष्ट्युत्तरशतत्रयचणकमोदकान् वा ) सदक्षिणाकान् नानानामगोत्रेभ्यो ब्राह्मणेभ्यो यथाकालं विभज्य दातुमहमुत्सृज्ये ।'

## अपूपदान-सङ्कल्पः ।

देशकालौ सङ्कीर्त्य 'मम कायिक वाचिक-मानसिक-सांसर्गिक-चतुर्विधपापक्षयपूर्वकं पुत्र-पौत्र - दीर्घायुरारोग्यैश्वर्यादि-समृद्धये पृथ्वीदानसमफलप्राप्तये मलमासपुण्यप्रदपर्वनिमित्तं विष्ण्वादित्रयस्त्रिंशद्देवानुद्दिश्य श्रीपुरुषोत्तमनारायणदेवताप्रीत्यर्थं इदं कांस्यपात्रसहितं सोपस्करं सहिरण्यं सदक्षिणाकं त्रयस्त्रिंशत्संख्यापरिमितं अपूपं कांस्यपात्राच्छादितं यथानामगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।'

## कूष्माण्डदान-सङ्कल्पः ।

देशकालौ सङ्कीर्त्य 'मम सकुटुम्बस्य सपरिवारस्य सर्वविधपापक्षयपूर्वकं पुत्र-पौत्र-धन-धान्य-दीर्घायुरारोग्यादिसमस्तसुखप्राप्त्यर्थं कूष्माण्डबीजसमवर्षब्रह्मलोकनिवासार्थं धर्मार्थकाममोक्षचतुर्विधपुरुषार्थसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं अमुकमहापर्वनिमित्तमिदं कूष्माण्डफलं सुवर्ण-घृत-वस्त्रादिसहितं (गुप्तद्रव्ययुतं) दक्षिणायुतं अमुकगोत्राय अमुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।'

## सौभाग्यवायनदान-सङ्कल्पः ।

देशकालौ सङ्कीर्त्य 'ममेह जन्मनि जन्मान्तरे चाखण्ड-सौभाग्यप्राप्तिपूर्वकं पुत्र-पौत्र-धन-धान्य-दीर्घायुरारोग्यैश्वर्यादि-प्राप्त्यर्थं श्रुति-स्मृति-पुराणोक्तफलप्राप्त्यर्थं धर्मार्थकाममोक्षसिद्धि-द्वारा पार्वती-शिवदेवताप्रीत्यर्थमुपस्करसहितानि इमानि सौभाग्यवायनानि नानानामगोत्रेभ्यः सपत्नीकेभ्यः अमुकामुक-शर्मभ्यः ब्राह्मणेभ्यः सदेवेभ्यः युष्मभ्यं सम्प्रददे ।'

## *सौभाग्यवतीनां सौभाग्याष्टकदान-सङ्कल्पः ।

देशकालौ सङ्कीर्त्य 'मम समस्तपापक्षयपर्वकं जन्म-जन्मान्तरे अविच्छिन्नसौभाग्यप्राप्तये श्रीपरमेश्वरप्रीत्यर्थं इदं सौभाग्याष्टकं अमुकगोत्राया कशर्मणे धर्मपत्नीसहिताय ब्राह्मणाय तभ्यमहं सम्प्रददे ।'

## सौभाग्यवतीनां द्वादशमासस्य दानविशेष-सङ्कल्पः ।

देशकालौ सङ्कीर्त्य 'मम ज्ञाताज्ञात-समस्तपापक्षयपूर्वकं सर्व-विश्वसुखैश्वर्यप्राप्तये जन्म-जन्मान्तरेष्वखण्डसौभाग्यप्राप्तिद्वारा

---

* मण्डले घृतनिष्पावकुसुम्भक्षीरकाणि च ।
स्तवराजेक्षुलवणं कुस्तुम्बुरु तथाष्टमम् ॥
दत्तं सौभाग्यकृद्यस्मात् सौभाग्याष्टकमित्यतः ॥
( कुस्तुम्बुरु---धान्याकम् ) ।

श्रीपरमेश्वरप्रीत्यर्थं *द्वादशमासेषु यानि विहितानि दानानि तानि सर्वाणि धर्मपत्नीसहितेभ्यः यथानामगोत्रेभ्यः ब्राह्मणेभ्यः विभज्य दातुमहमुत्सृज्ये ।'

### [1]वन्ध्यात्वहरसुवर्णधेनु-दान-संकल्पः ।

देशकालौ सङ्कीर्त्य 'मम अनेकजन्मोपार्जित-जीवत्पुत्र-सन्तान-प्रतिबन्धकीभूत - समस्तपापक्षयपूर्वक - वन्ध्यात्वदोषनिरासपूर्वकञ्च दीर्घायुःसत्पुत्रप्राप्तये इमां सवत्सां सुवर्णमयीं धेनुं रुद्रदैवत्यां वन्ध्यात्वहरां सदक्षिणाकां सालङ्कारां अमुकगोत्रायामुकशर्मणे ब्राह्मणाय तभ्यमहं सम्प्रददे ।'

### सहस्रब्राह्मणभोजन-सङ्कल्पः ।

देशकालौ सङ्कीर्त्य 'मम इह जन्मनि जन्मान्तरे वा कायिक-वाचिक-मानसिक-सांसर्गिकसमस्तपापक्षयपूर्वक-सकलमनोरथसिद्धये धर्मार्थकाममोक्ष-चतुर्विधपुरुषार्थ-सिद्धिपुरस्सरं वैकुण्ठलोक-प्राप्त्यर्थं श्रीपरमेश्वरप्रीत्यर्थं यथानामगोत्रान् सहस्रसंख्याकान् ब्राह्मणान् यथाकालं यथादेशं दक्षिणादानपूर्वकं भोजयिष्ये ।'

---

* चैत्रे विशालाक्षिप्रीतये सुवर्णसहितं कुङ्कुमदानम् । वैशाखे श्रीमुखी-प्रीतये सुवर्णसहितं शर्करादानम् । ज्येष्ठे नारायणीप्रीतये ताम्बूलदानम् । आषाढे माधवीप्रीतये सुवर्णसहितं गुडतिलदानम् । श्रावणे कमलाप्रीतये सुवर्णसहितं गुडतिलदानम् । भाद्रपदे सुभद्राभद्राप्रीतये सुवर्णसहितं फलदानम् । आश्विने पार्वतीप्रीतये सुवर्णसहितं चन्दनदानम् । कार्तिके धनदाप्रीतये सुवर्णसहितं आज्यदानम् । मार्गशीर्षे उमाप्रीतये सुवर्णसहितं लवणदानम् । पौषे इन्द्राणी-प्रीतये सुवर्णसहितं अन्नदानम् । माघे गौरीप्रीतये तिलसहितं गुडदानम् । फाल्गुने राधिकाप्रीतये सुवर्णसहितं वस्त्रदानम् । ( विशेषस्तु दानसंग्रहस्याष्टमे कोशे द्रष्टव्यः ) ।

१—वन्ध्या नार्यः चतुर्विधाः भवन्ति—वन्ध्या, काकवन्ध्या, स्त्रीप्रसूः, मृतप्रजा च । काकवन्ध्या नारी तु काकवदेकमेव पुत्रं जनयति । शेषास्तु स्पष्टा एव ।

## सर्वप्रायश्चित्तसङ्कल्पः ।

देशकालौ सङ्कीर्त्य, मम इह जन्मनि जन्मान्तरे वा बाल्य-यौवन-वार्धक्यावस्थासु वाक्-पाणि-पाद-पायूपस्थ-श्रोत्र-चक्षुर्जिह्वा-घ्राण-मनोभिः ज्ञाताज्ञात-कामाकाम-सकृदसकृत्-कायिक-वाचिक-मानसिक-सांसर्गिकाणाम् आचरितानां समेषां पापानाम्, ब्राह्मणनिन्दा-गुरुनिन्दा-माता-पितृनिन्दा-देवनिन्दा-तीर्थनिन्दा- वेद-निन्दा - शास्त्रनिन्दा - माता-पितृ - ज्येष्ठ-भ्रातृ - गुरु - तिरस्कार-माता-पितृ-गुरुद्रोह-परद्रोह-परनिन्दा-आत्मस्तुतिरूपाणाम्, अस्पृश्य-स्पर्शन-अश्रव्यश्रवण-अहिंस्य - हिंसन-अवन्द्यवन्दन - अचिन्त्यचिन्तन-अयाज्ययाजन - अपूज्यपूजनरूपाणाम्, परमर्मोद्घाटनमिथ्या-पवाद - मिथ्याभाषण - म्लेच्छसम्भाषण - पतितसम्भाषण - परस्त्री-सम्भाषण-परस्त्रीगमन-ब्रह्मद्वेषकरण- ब्रह्मवृत्तिहरण - परवृत्तिहरण-हीनजाति-सेवन-निषिद्धाचरणरूपाणाम्, शौचत्याग-सन्ध्योपासन-त्याग-तर्पण-बलिवैश्वदेव-नित्यहोमत्याग-देवपूजनत्याग - स्वग्राम-त्याग-स्वदेशत्याग-परिवारत्याग - कुलत्याग - स्वधर्मत्याग-सदाचार-त्याग-शीलत्याग-गुरुत्याग-वेदत्याग-शास्त्रत्याग-आश्रमत्याग - रूपा-णाम्, अभक्ष्य-भक्षण-अभोज्य-भोजन-अचूष्य-चूषण-अलेह्य-लेहन-अपेयपान-लशुन-पलाण्डु-गृञ्जन-भोजन-उच्छिष्टभोजन - दूषितान्न-भोजन - निन्दितान्नभोजन-निषिद्ध - परान्न - भोजन - संकलीकरण-मलिनीकरण - अपात्रीकरण - जातिभ्रंशकरप्रकीर्णकपातकानामे-तत्कालपर्यन्तं सञ्चितानां गुरु-लघु - स्थूल - सूक्ष्मरूपाणां समेषां पापानां परिहारपूर्वकं यथावत्फल - प्राप्त्यर्थं श्रीपरमेश्वर-प्रीत्यर्थं स्वशरीरसंशुद्धये देव-ब्राह्मणसन्निधौ करिष्यमाणामुककर्मा-धिकारसिद्ध्यर्थं द्वादशाब्दं षडब्दं त्र्यब्दं वा सर्वप्रायश्चित्तं करिष्ये । तदङ्गत्वेन दशदानानि च यथानामगोत्रेभ्यः ब्राह्मणेभ्यः विभज्य दातुमहमुत्सृज्ये ।

## नारी-प्रायश्चित्तसङ्कल्पः ।

देशकालौ सङ्कीर्त्य, मम जन्मप्रभृति अद्यदिनं यावत् बाल्य-कौमार-यौवन-वार्द्धक्येषु जाग्रत्-स्वप्न-सुषुप्त्यवस्थासु च कर्मेन्द्रियै-र्ज्ञानेन्द्रियैश्च काम-क्रोध-लोभ-मोह-मद-मात्सर्यादिभिः कायिक-वाचिक-मानसिक-सांसर्गिकाणाम्, ज्ञानतः सकृत्कृतानाम्, अज्ञानतः असकृत्कृतानाम्, स्पृष्टास्पृष्ट-भुक्ताभुक्त-पीतापीत-दृष्टादृष्टादीनाम्, अस्नानभोजन-उच्छिष्टभोजन - नग्नभोजन - शूद्रशेषान्नभोजन रज-स्वलाशेषान्नभोजन-श्राद्धशेषान्नभोजन - असंस्कृतान्नभोजन - वैश्व-देवरहितान्नभोजन-द्विवारभोजन-मौनरहितभोजन, वटैरण्डाश्व-त्थार्क - पत्रान्नभोजन- शिलापात्र-दारुपात्रान्नभोजन-अयस्ताम्र-त्रपु-सीस-कांस्यपात्रान्नभोजन - एकादश्यन्नभोजन-निषिद्धशाक - भक्षण, [ विधवास्त्रीकृते—हरिद्रा-कुङ्कुम-कस्तूर्यादि-सुगन्धद्रव्यधारण-सुव-र्णादिभूषणधारण-कज्जल - कञ्चुकधारण - रक्त-पीत-नीलवस्त्रादि-धारण ]तिष्ठन्मूत्रपुरीषोत्सर्जन-आशौच-राहित्य-अकालस्नान-अकाल-जलपान-अकालभोजन-अस्नानजलपान-नग्नजलपान-नग्नस्नान-नग्न-भाषण-नग्नशयन-सूर्योदयास्तमयस्वपन-दिवास्वपन-अनृतभाषण-व्यर्थ-भाषण-कटुभाषण-निष्ठुरभाषण-अकारण हास्यकरण - पतिदूषण-पति-वचनोल्लङ्घन-श्वश्रू-श्वशुर -माता-पितृवचनोल्लङ्घन-द्वेषकरण-तिर-स्कारकरण-आज्ञाभङ्गकरण - ब्राह्मण-गुरु-अपमानकरण - कोपकरण-कलहकरण-सपत्नीद्वेषकरण-शिशुताडन-पंक्तिभेदकरण - शिरोहनन-मलिनवस्त्रधारण-पर्वकाल-सन्ध्याकाल-अशुभदिनपतिसङ्गम-रजस्व-लावस्थायां पतिसङ्गम-भाण्डादि-स्पर्शन-परपुरुषावलोकन-परपुरुषस-म्भाषण-परपुरुषालिङ्गन-परपुरुषमुखास्वादन-परपुरुषसङ्गमन-स्नान-देवपूजनादिनित्यकर्मत्याग-एकादशी-ग्रहण-अयन-सङ्क्रान्त्यादि - पर्व-कालस्नानत्याग -व्रतोपवासत्याग -श्रीमद्भागवतादिपुराणकथाश्रवण-त्याग-भर्तृ-पैतृक-तिथित्याग- पुण्यकर्मत्याग-यति-ब्रह्मचारि-अतिथि-

ब्राह्मणभिक्षा-त्याग-दुर्गुणप्रयुक्तकर्मनिषेवणादीनां सर्वेषां पापानां सद्यः अपनोदार्थं श्रुति-स्मृति-पुराणोक्तफलप्राप्त्यर्थं धर्मार्थकाम-मोक्ष-चतुर्विधपुरुषार्थसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं वेदशास्त्र-सम्पन्न-व्रताध्ययनशालिब्राह्मणोत्तमसन्निधौ कृच्छ्रात्मकं गोदानं (यथाशक्ति वा) करिष्ये।

## गंगादिनदीस्नानार्थं हेमाद्रिसङ्कल्पः।

ॐ स्वस्ति श्रीसमस्तजगदुत्पत्तिस्थितिलयकारणस्य रक्षा-शिक्षाविचक्षणस्य प्रणतपारिजातस्य अच्युतानन्तवीर्यस्य श्रीमद्भगवतो महापुरुषस्य श्रीमदादिनारायणस्य अचिन्त्यापरिमितशक्त्या ध्रियमाणानामव्यक्तमहदहङ्काराकाशवायुतेजोऽम्भः-पृथिव्यावरणैरावृतानामनेककोटिब्रह्माण्डानामेकतमे आधारशक्ति-वराहकूर्माणामुपरिष्टात् स्थितस्य महाकालायमानश्रीफणिराज-शेषस्य सहस्रफणामणिमण्डलमण्डिते ऐरावत-पुण्डरीक-वामन-कुमुदाञ्जन-पुष्पदन्त-सार्वभौमसुप्रतीकाख्याष्टदिग्दन्तिशुण्डा-दण्डोत्तम्भितेऽस्मिन् ब्रह्माण्डे अतल-वितल-सुतल-रसातल-तलातल-महातल-पातालाख्यलोकसप्तकस्योपरिभागे भुवःस्वर्महर्जनस्तपः-सत्येति-लोकानामधोभागे भूर्लोके चक्रवाल-शैलवालभ्रमितसुवर्ण-भूम्यन्तःस्थितशुद्धोदकक्षीरदधिसर्पिः-सुरेक्षुलवणार्णवपरिवृतपुष्कर-शाकक्रौञ्चकुशशाल्मलिप्लक्षजम्बूद्वीपसमन्विते पञ्चाशत्कोटि-योजनविस्तीर्णे भूमण्डले कुवलयकोशाभ्यन्तरकोशवत्स्थितजम्बू-द्वीपकर्णिकायितसुमेरुमुत्तरेण नीलश्वेतशृङ्गवतां रम्यकहिरण्म-योत्तरकुरुसंज्ञकवर्षमर्यादागिरीणां दक्षिणतो निषधहेमकूटहिमा-लयानां हरिवर्षकिंपुरुषभारतवर्षमर्यादागिरीणां पूर्वापरयोश्च गन्धमादनमाल्यवतोर्धनुर्वत्संस्थितभद्राश्वकेतुमालमर्यादाशैलयोर्मध्ये चतुरस्रे लावृतोपशोभिते इन्द्रद्वीपकसेरुताम्रपर्णगभस्तिमन्नाग-

गन्धर्व-वारुण-भारतेति नवभेदोपलक्षिते स्वर्णप्रस्थ-चन्द्रप्रस्थ-शुक्ल-सूक्तिकावर्तकमन्दर - हरिण-पाञ्चजन्य - सिंहल - लङ्केत्यष्टोपद्वीप - दीपिते श्रीमद्भगवतः साक्षाद्यज्ञलिङ्गस्य विष्णोस्त्रैविक्रमे वाम - पादाङ्गुष्ठनखनिर्भिन्नोर्ध्वाण्डकटाहविवरेणान्तःप्रविष्टबाह्य - जल-धारायास्तच्चरणपङ्कावनेजनारुणकिञ्जल्कोपरञ्जितायाः अखिल-जगदघमलापहोपस्पर्शनायाः सुमेरुमूर्ध्न्यधिब्रह्मणश्चतुर्द्धा भिद्यमा-नाया विष्णुपद्या हेमकूटादिमार्गेण दक्षिणपयोधिं प्रविशताऽ-लकनन्दाख्येन स्रोतसाऽनुपूतधनुराकारनवसहस्रयोजनविस्तीर्णे भारतखण्डे महेन्द्रमलयसह्यशक्तिमदृक्षविन्ध्यपारियात्रेति सप्तकुल-पर्वतोपशोभिते चम्पकारण्य-बदरिकारण्यान्तर्गत-नैमिषारण्ये हिम-वद्-विन्ध्यान्तर्भूतार्यावर्तान्तर्गतब्रह्मावर्तैकदेशे कर्मभूमौ लङ्को-ज्जयिनीकुरुक्षेत्रादिकाया भुवो मध्यरेखायाः पूर्वदिग्भागे कुमारि-काक्षेत्रान्तर्वर्तिनि श्रीमदमुकक्षेत्रे अमुकनद्या अमुकतीरे [ श्रीमद-विमुक्तवाराणसीक्षेत्रे श्रीमद्विश्वेश्वरपालितराजधान्यां समस्त-नन्दिभृङ्ग्यादिगणैर्महाविष्ण्वाद्यमरैर्व्यासाद्यष्टर्षिभिर्विघ्नविनायक - दण्डपाणि-कालभैरवादिभिश्च संसेवितायां सायुज्य-सालोक्यादि-चतु-र्विधमुक्तिप्रदायां श्रीमदुत्तरवाहिन्या गङ्गायाः पश्चिमतीरे ] विरा-जमानायां सकलकल्याणसाधनभूमौ गोमयोपलिप्तप्रदेशोल्लिखित-स्वस्तिकादौ चन्दनमाल्यादिना सुगन्धिद्रव्यैश्चर्चितेऽस्मिन् गृहे शुभमण्डपे देव-द्विजाग्नीनां सन्निधाने श्रीमत्क्षीरनिधिमध्यमध्या-सितभुजङ्गपर्यङ्कशयनभगवन्नाभिसरोरुहाधिवासिनो देव-तिर्यङ्-मनुष्यादिसकलस्रष्टुः परार्द्धद्वयजीविनो ब्रह्मणो द्वितीये परार्द्धे प्रथमवर्षे प्रथममासे प्रथमपक्षे प्रथमदिवसे तद्द्वितीययामे तृतीये मुहूर्ते रथन्तरादिद्वात्रिंशत्कल्पानां मध्ये श्रीश्वेतवाराहकल्पे स्वा-यम्भुवादिचतुर्दशमन्वन्तराणां मध्ये सप्तमे वैवस्वतमन्वन्तरे अष्टा-विंशतितमे कलियुगे तत्प्रथमचरणे श्रीविष्णोर्बौद्धावतारे संवत्स-राणामष्टशत्यधिकायां चतुःसाहस्र्यां व्यतिक्रान्तायां तदुपरि

व्यतिक्रममाणे श्रीमन्नृपविक्रमार्कशतसंवत्सरान्तर्गतशालिवाहन-शके प्रवर्तमाने चान्द्रसावनसौरनाक्षत्रभ्रमितबार्हस्पत्यज्यानुमानेन प्रभवादिषष्टिसंवत्सराणां मध्येऽमुकनाम्नि संवत्सरेऽमुकगोलावलम्बिनि श्रीमन्मार्तण्डमण्डलोदये अमुकायनगते श्रीसूर्ये अमुकऋतौ अमुकमासेऽमुकपक्षेऽमुकतिथावमुकनक्षत्रेऽमुककरणेऽमुकराशिस्थे चन्द्रेऽमुकराशिस्थे सूर्येऽमुकराशिस्थे देवगुरौ शेषेषु ग्रहेषु यथा-राशिस्थानस्थितेषु एवंग्रहगुणगणविशेषणविशिष्टायां शुभपुण्यतिथौ अमुकगोत्रोत्पन्नोऽमुकशर्माहं सहस्रावधि पूर्वजन्मान्तरेषु अस्मिन् जन्मनि च आत्मसमवेत-कायेन्द्रिय-वाङ्मनोभिः ज्ञानतोऽज्ञानतो वा कृतानां बाल्य-कौमार-यौवन-वार्धक्येषु जाग्रत्-स्वप्न-सुषुप्त्यवस्थासु मनोवाक्कायकर्मभिः काम-क्रोध-लोभ-मोह-मद-मात्सर्यैः त्वक्-चक्षुः-श्रोत्र-जिह्वा-घ्राण-वाक्-पाणि-पाद-पायूपस्थैःसम्भावितानां पापानाम्, ब्रह्महनन-मद्यपान-सुवर्णस्तेय-गुरुतल्पगमन-तत्संसर्गरूपमहापातकानाम्, गोहनन-स्तेयीकरण-नरेन्द्राज्ञाभङ्ग-श्रोत्रिय-विप्रादिमानभङ्ग-बुद्धिपूर्वक - बहुकालाधीताभ्यस्त - वेद-शास्त्र-विस्मरणादीनामुपपातकानाम्, ब्राह्मण-स्त्री-बाल - पशुजातिवध - विधवास्त्रीगमन - शूद्रागमन - दासीगमन-वेश्यागमन - रजस्वलागमन - हीनवर्णागमन - सयोनिजास्त्रीगमन-शरणागतस्त्रीगमन - सगोत्रस्त्रीगमन - अगम्यागमनादिपापानाम्, पशुयोनिबीजपात - कूटसाक्षित्व - पैशुन्यवाद - मिथ्यापवाद-म्लेच्छ-सम्भाषण - ब्रह्मद्वेषकरण-स्वामिभेदन - मित्रवञ्चन-गर्भपातन-अकाम-ब्राह्मण्यादिस्त्रीस्पर्शन-अभेद्यभेदन - अभक्ष्यभक्षण-अपेयपान-अलेह्यलेहन-अचूष्यचूषण -अनिरीक्ष्यनिरीक्षण - अवाच्यवाचन-अस्पृश्यस्पर्शन-परमर्मभेदन-परवृत्तिच्छेदन-देवनिन्दा - ब्राह्मणनिन्दा-गुरुनिन्दा- मित्र-निन्दा - अतिथिनिन्दा - परिवारनिन्दा-वेदनिन्दा-शास्त्रनिन्दा-आत्मस्तुति - क्रूरकर्म - हिंसा - लुब्धक-चौर-पाषण्डिभाषण - सङ्कुलीकरण-मलिनीकरण-अपात्रीकरण - जातिभ्रंशकरण-रसविक्रय- कन्याविक्रय-

हयविक्रय-गोविक्रय-खरोष्ट्रविक्रय-दासीविक्रय-अजादिपशुविक्रय-निरर्थकार्द्रवृक्षच्छेदन-ऋणानपाकरण-ब्रह्मस्वापहरण-देवस्वापहरण-राजस्वापहरण-चिताकाष्ठधूम्रचाण्डालादिस्पर्शन-क्षुद्रकर्म-रजस्वलादिमुखास्वादन-कुग्रामवास-आसुरीकर्म-निष्ठुरभाषण-पथिताम्बूलभक्षण-दुराग्रहदुर्भाण्डदुष्प्रतिग्रहग्रहण-असाक्षिभोजन-एकाकिमिष्टान्नभक्षण-आत्मार्थपाककरण-स्त्री-बालक-सहभोजन-द्विवारभोजन-यत्यन्नभोजन-यतिप्रेरितान्नभोजन-यतिपक्वान्नभोजन-यतिपात्रस्थान्नभोजन-यतिस्पृष्टभोजन-यतिदापितान्नभोजन-शूद्रस्पृष्ट-शूद्रदृष्ट-शूद्रपाचितान्नभोजन-ग्रहणकालपक्वान्नभोजन-ग्रहणसमयभोजन-पर्वकाल-रात्रिभोजन-अनिवेदितान्नभोजन-हस्तपरिविष्टान्नादिभोजन पिशाचोद्देश्यभोजन-वटादिनिषिद्धपत्रभोजन-ग्रामयाजक-देवलक-वृषलीपतिभोजन-शाक्तपतितान्नभोजन-भिन्नकांस्यपात्रभोजन-ताम्र-अलाबु-दारु-पाषाण-मृत्पात्रभोजन-क्रमुकादिपात्रभोजन-रजस्वला-चाण्डालादि-वाक्यश्रवण भोजन-दग्ध-पूतिगन्धि-भुक्तोच्छिष्टभोजन-गणान्नभोजन-शूद्रपात्रस्थान्नभोजन-शूद्र भुक्तशेषान्नभोजन-पंक्तिभेदन-परशय्याशयन-गृहकार्पण्यदोष-अश्राव्यश्रवण-अहिंस्यहिंसन-अवन्द्यवन्दन-अचिन्त्यचिन्तन-अयाज्ययाजन-अपूज्यपूजन-पूज्यपूजाव्यतिक्रम-मातापितृतिरस्कार-स्त्री-पुरुषप्रीतिभेदन-पश्वादिहिंसा-स्नान-सन्ध्या-देवपूजा-त्याग-औपासनाग्नित्याग-बलिवैश्वदेवत्याग-गुरु-लघु-स्थूल-सूक्ष्म-पापानामेतत्क्षणपर्यन्तं सञ्चितानामन्येषां च पापानां निरासपूर्वकं प्रायश्चित्तार्थं सहस्रगोदानजन्य-अयोध्या-मथुरा-माया-काशी-काञ्ची-अवन्तिकापुरी-द्वारावती-सप्तपुरी-प्रयाग-पुष्कर-कुरुक्षेत्रादि-समस्ततीर्थस्नानजन्यफलप्राप्तये समस्तपितॄणाम् आत्मनश्च विश्वेश्वरादिलोकप्राप्तये आधारशक्तिमारभ्य सप्तर्षिमण्डलपर्यन्तं कृतराशेः सहस्रवर्षावच्छिन्नवर्षावसाने एकैकवालुकापकर्षणक्रमेण यावद्राशिसमाप्तिः तावत्कालपर्यन्तं श्रीविष्णोः प्रीत्यर्थं मम सकुटम्बस्य

सपरिवारस्य उत्पन्नोत्पन्न-आध्यात्मिक-आधिदैविक-आधिभौतिक-त्रिविधतापनिवृत्तये सकलपापक्षयार्थं राजयक्ष्मादि-नानाविध-वात-पित्त-कफ-जनित-व्याधिविनाशार्थं संग्रामे विवादे वैरिणा सह विग्रहे च विजयार्थम् आयुरारोग्यैश्वर्यादिविविधसम्पत्प्रवृद्धये अधीतानामध्येष्यमाणानां श्रुति-स्मृति-पुराणादिशास्त्राणां अनध्ययने अनभ्यासे च यत्कृतं पापं तज्जनितपाप-निरासार्थं च [ नवोपनीतानां वेदग्रहणाधिकारसिद्धये सर्वेषामाप्यायनार्थं च इतरेषामुत्सृष्टानां वेदानां पुनर्ग्रहणार्थं च यातयामदोष-परिहारार्थं यथावद्देवतोपासनया यथावत्फलप्राप्त्यर्थम् ] देव-ब्राह्मण-सवितृ-नारायण-सन्निधौ गङ्गाभागीरथ्यां (नद्यन्तरे जलाशये वा) प्रवाहाभिमुखो नाभिमात्रजले [ अध्यायोत्सर्गोपाकर्मनिमित्तम् स्नानविधिना गण-स्नानं ] स्नानं करिष्ये ।

—·—

# यज्ञ-सामग्री

रोली १ पाव
मौली १ पाव
धूपबत्ती ४ पैकेट
केसर ६ मासा
कपूर ४ तोला
।) अबीर (गुलाल)
।) बुक्का (अभ्रक)
।।) सिन्दूर
पीली हलदी १ पाव
यज्ञोपवीत ५०
रूई १ पाव
चावल
सुपारी ५ सेर
पान ५० प्रतिदिन
पेड़ा १ सेर प्रतिदिन
ऋतुफल १ दर्जन प्रतिदिन
बतासा १। सेर
पंचमेवा १। सेर
मिश्री १। सेर
इलायची छोटी २ तोला
लवंग २ तोला
जावित्री २ तोला
जायफल १५

अतरकी शीशी १
गुलाबजलकी शीशी १
कस्तूरीकी शीशी १
दुग्ध २ पाव प्रतिदिन
दही १ पाव प्रतिदिन
चीनी १ पाव प्रतिदिन
घृत
सहत १ पाव
गोबर
गोमूत्र
=) पीली सरसों
कच्चा सूत १ पाव
पुष्पमाला २ दर्जन प्रतिदिन
पुष्प फुटकर प्रतिदिन
तुलसी प्रतिदिन
दूर्वा प्रतिदिन
बिल्वपत्र प्रतिदिन
कुशा
गंगाजल
नारियल जटादार २५
गिरिके गोले ११
चन्दनका मुट्ठा १
होरसा १
रुद्राक्षकी माला १

॥) लालरंग
॥) हरारंग
॥) पीलारंग
॥) कालारंग
पंचरत्नकी पुड़िया ७

*पञ्च-पल्लव—*

आम्रपत्र
गूलरपत्र
पाकरपत्र
वटपत्र
पीपलपत्र

*सर्वौषधि—*

=) मुरा
=) जटामासी
=) वच
=) कूट
।) शिलाजीत
=) आंबाहलदी और दारूहलदी
=) सठी ( कचूर )
=) चंपा
=) नागरमोथा

*सप्त-मृत्तिका—*

हाथीके स्थानकी मिट्टी
घोड़ेके स्थानकी मिट्टी
बिल (दीमक)की मिट्टी
नदी संगमकी मिट्टी
तालाबकी मिट्टी
राजद्वार (चतुष्पथ) की मिट्टी
गोशालाकी मिट्टी

*सप्त-धान्य—*

यव १। सेर
गेहूँ १। सेर
धान १। सेर
तिल १। सेर
ककुनी १ पाव
सावाँ २ पाव
चना १। सेर

*नवग्रहकी लकड़ी—*

मदारकी लकड़ी १०८
पलाशकी लकड़ी १०८
खैरकी लकड़ी १०८
अपामार्गकी लकड़ी १०८
पीपलकी लकड़ी १०८
गूलरकी लकड़ी १०८
शमीकी लकड़ी १०८
दूर्वा १०८
कुशा १०८
मृगचर्म नूतन १
कंबल नूतन १
सूतकी डोरी मोटी १० हाथकी
रूई १ पाव
लोहेकी कंटिया ४
तांबेका तार २५ हाथ

काष्ठकी चौकी नूतन २
काष्ठका पीढ़ा नूतन ४
काला उड़द १। सेर

*यज्ञपात्र—*

प्रणीता
प्रोक्षणी
स्रुवा
स्रुची
स्फ्य
वसोर्धारा
अरणि-मन्था
शंख १
घण्टा १
घड़ौल १
आरती दानी १
प्रधान कलश चाँदीका अथवा ताम्रका १
वास्तु कलश ताम्रका १
क्षेत्रपाल कलश ताम्रका १
योगिनी कलश ताम्रका ३ अथवा १
रुद्र कलश ताम्रका १
प्रवेश कलश ताम्रका १
कलश ताम्रके १८
पुण्याहवाचन कलश कमण्डलु १
पूर्णपात्र (बघोना) ब्रह्माके लिये १
प्रधान कुण्डका कलश ताम्रका १

थाली मुरादाबादी ४
पराँत बड़ी १
आज्यस्थाली (कटोरा बड़ा) हवनार्थ १
चरुस्थाली ( बघोना ) १
अभिषेकपात्र १
कांसेकी थाली १
कड़छुल पीतल १
सड़सी पीतल १
चिमटा पीतल १
छायापात्र ( कांसेकी कटोरी ) २
कटोरी पूजनार्थ ११
बालटी पीतल १
गंगासागर १

*देवताओंको चढ़ानेके वस्त्र—*

भगवान्‌के लिये रेशमी पीतांबर २
रेशमी जनानी साड़ी १
कब्जा जनाना १
रेशमी चुंदड़ी १
सौभाग्य पिटारी १
शृङ्गारदान १
दुशाला अथवा ऊनी चादर १
धोती १५ अथवा ११
डुपट्टा १५ अथवा ११
अंगोछा १५ अथवा ११

*ध्वजा-पताका तथा वेदी आदिके लिये वस्त्र—*

सफेद कपड़ा २५ गज
लाल कपड़ा १५ गज
हरा कपड़ा १५ गज
काला कपड़ा १५ गज
पीला कपड़ा १५ गज
चंदवा पचरंगा बड़ा १
चंदवा छोटे ५
मण्डपाच्छादनार्थ वस्त्र सफेद-थान २
देवताओंकी तस्वीर बड़ी १६
घड़ी नूतन ( मण्डपमें लगानेके लिये )१
शीशा बड़ा १
घुँघरू पीतलके ५०
प्रधान देवताकी प्रतिमा सुवर्णकी ४ तोलेकी अथवा १। तोलेकी१
प्रधान देवीकी प्रतिमा सुवर्णकी १। तोलेकी १
भगवान्के लिये सुवर्णकी माला१
वास्तुकी प्रतिमा सुवर्णकी ६ मासेकी १
क्षेत्रपालकी प्रतिमा सुवर्णकी ६ मासेकी १
योगिनीकी प्रतिमा सुवर्णकी ६ मासेकी १
नवग्रहकी प्रतिमा सुवर्णकी ९ मासेकी १
रुद्रकी प्रतिमा सुवर्णकी ६ मासेकी १
सुवर्णकी शलाका ३ मासेकी १
सुवर्णकी जिह्वा ३ मासेकी १
सुवर्ण खण्ड ५१
गरुडकी प्रतिमा चाँदीकी १
नन्दीकी प्रतिमा चाँदीकी १
चाँदीका सिंहासन १
चाँदीका छत्र १
चाँदीका चंवर १
चाँदीकी थाली १
चाँदीकी कटोरी २
चाँदीका गिलास १
चाँदीकी तस्तरी १
चाँदीका पंचपात्र १
चाँदीकी आचमनी १
चाँदीका अर्घा १
चाँदीका तष्टा १
चाँदीकी धूपदानी १
चाँदीकी आरती दानी १
चाँदीका चौकोरपत्र(१६ अंगुल लंबा और चौड़ा) १

*वरण-सामग्री—*

धोती रेशमी सूती
दुपट्टा ऊनी, रेशमी अथवा सूती

- अंगोछा
- लोटा
- गिलास
- पंचपात्र
- आचमनी
- गोमुखीमाला
- खडाऊँ
- यज्ञोपवीत
- आसन
- अंगूठी सुवर्णकी

*आचार्य-वरणसामग्री—*

- पीतांबर रेशमी १
- दुशाला १
- शिल्क रेशमी १
- अंगोछा १
- लोटा चाँदीका १
- गिलास चाँदीका १
- पंचपात्र चाँदीका १
- आचमनी चाँदीकी १
- अर्घा चाँदीका १
- तष्टा चाँदीका १
- सुवर्णकी अंगूठी १
- सुवर्णकी माला १
- रुद्राक्षकी माला १
- ऊनी गलीचेका आसन १
- गोमुखी माला १
- खड़ाऊँ १
- यज्ञोपवीत १

*शय्यादान-सामग्री—*

- पलंग नेवारका १
- दरी १
- गद्दा रूईका १
- चाँदनी १
- चदरा २
- सुजनी १
- मसहरी १
- रजाई १
- कंबल १
- तकिया २
- धोती १
- दुशाला १
- शिल्क १
- पीतांबर १
- जनानी साड़ी १
- कोट १
- कमीज १
- साफा ( पगड़ी ) १
- छाता १
- जूता ( स्वदेशी ) १
- घड़ी १
- पानदान १
- पीकदान १
- अतरदान १
- भोजनके वर्तन १५ या ११
- चूल्हा १
- लालटेन १
- अन्न सभी प्रकारके
- घृत टीन १
- शीशा बड़ा १
- सौभाग्यपिटारी १
- शृंगारदान १
- अंगूठी सुवर्ण १
- सिकड़ी सुवर्ण १
- कण्ठा सुवर्ण १
- चाँदीके वर्तन ५
- गीताकी पुस्तक १
- वेद और पुराणकी पुस्तक

## हवन-सामग्री

| *विष्णुयाग* | *महाविष्णुयाग* | *अतिविष्णुयाग* |
|---|---|---|
| तिल ६ मन | तिल १२ मन | तिल ३० मन |
| चावल ३ मन | चावल ६ मन | चावल १५ मन |
| यव १॥ मन | यव ३ मन | यव ७॥ मन |
| चीनी १ मन | चीनी १॥मन | चीनी ३ मन |
| घृत २ मन | घृत ३ मन | घृत ५ मन |
| कमलगट्टा १ सेर | कमलगट्टा २ सेर | कमलगट्टा ४ सेर |
| चन्दनका चूरा २ सेर | चन्दनका चूर २ सेर | चन्दनका चूरा ५ सेर |
| गुग्गुल १ सेर | गुग्गुल १ सेर | गुग्गुल ३ सेर |
| पंचमेवा १ सेर | पंचमेवा २ सेर | पंचमेवा ४ सेर |
| भोजपत्र २ पाव | भोजपत्र २ पाव | भोजपत्र १ सेर |
| आमकी लकड़ी२०मन | आमकी लकड़ी२५मन | आमकी लकड़ी४०मन |

| *रुद्रयाग* | *महारुद्रयाग* | *अतिरुद्रयाग* |
|---|---|---|
| तिल ६ मन | तिल १५ मन | तिल ३० मन |
| चावल ३ मन | चावल ७॥ मन | चावल १५ मन |
| यव १॥ मन | यव ३॥ मन | यव ७॥ मन |
| चीनी १ मन | चीनी १॥ मन | चीनी ३ मन |
| घृत २ मन | घृत ३ मन | घृत ५ मन |
| कमलगट्टा १ सेर | कमलगट्टा २ सेर | कमलगट्टा ४ सेर |
| चन्दनका चूरा २ सेर | चन्दनका चूरा २ सेर | चन्दनका चूरा ५ सेर |
| गुग्गुल १ सेर | गुग्गुल १ सेर | गुग्गुल ३ सेर |
| पंचमेवा १ सेर | पंचमेवा १ सेर | पंचमेवा ४ सेर |
| भोजपत्र २ पाव | भोजपत्र २ पाव | भोजपत्र १ सेर |
| आमकी लकड़ी२०मन | आमकी लकड़ी२५ मन | आमकी लकड़ी४०मन |

# हवन-सामग्री

| *हरिहरमहायज्ञ* | *शिवशक्तिमहायज्ञ* | *मृत्युञ्जयमहायज्ञ* |
| --- | --- | --- |
| तिल ११ मन | तिल ८ मन | तिल ६ मन |
| चावल ५॥ मन | चावल ४ मन | चावल ३ मन |
| यव २॥। मन | यव २ मन | यव १॥ मन |
| चीनी १॥ मन | चीनी १ मन | चीनी ३० सेर |
| घृत २ टीन | घृत २ टीन | घृत २ टीन |
| पंचमेवा १ सेर | पंचमेवा १ सेर | पंचमेवा १ सेर |
| चन्दनका चूरा २ सेर | चन्दनका चूरा २ सेर | चन्दनका चूरा २ सेर |
| कमलगट्टा १ सेर | कमलगट्टा १ सेर | कमलगट्टा १ सेर |
| भोजपत्र २ पाव | भोजपत्र २ पाव | भोजपत्र २ पाव |
| गुग्गुल १ सेर | गुग्गुल १ सेर | गुग्गुल १ सेर |
| आमकी लकड़ी २५मन | आमकी लकड़ी २०मन | आमकी लकड़ी २०मन |

| *रामयज्ञ* | *गणेशयज्ञ* | *प्रजापतियज्ञ* |
| --- | --- | --- |
| तिल ८ मन | तिल ११ मन | तिल ६ मन |
| चावल ४ मन | चावल ५॥ मन | चावल ३ मन |
| यव २ मन | यव २॥। मन | यव १॥ मन |
| चीनी १ मन | चीनी १। मन | चीनी १ मन |
| घृत २ टीन | घृत २ टीन | घृत २ टीन |
| पंचमेवा १ सेर | पंचमेवा १ सेर | पंचमेवा १ सेर |
| चन्दनका चूरा २सेर | चन्दनका चूरा २सेर | चन्दनका चूरा २ सेर |
| कमलगट्टा १ सेर | कमलगट्टा १ सेर | कमलगट्टा १ सेर |
| भोजपत्र २ पाव | भोजपत्र २ पाव | भोजपत्र २ पाव |
| गुग्गुल १ सेर | गुग्गुल १ सेर | गुग्गुल १ सेर |
| आमकीलकड़ी २०मन | आमकीलकड़ी २५मन | आमकीलकड़ी २०मन |

## हवन-सामग्री

| सूर्ययज्ञ | दुर्गायज्ञ | लक्ष्मीयज्ञ |
|---|---|---|
| तिल ६ मन | तिल ८ मन | तिल ८ मन |
| चावल ३ मन | चावल ४ मन | चावल ४ मन |
| यव १॥ मन | यव २ मन | यव २ मन |
| चीनी १ मन | चीनी १ मन | चीनी १ मन |
| घृत २ टीन | घृत २ टीन | घृत २ टीन |
| पंचमेवा १ सेर | पंचमेवा १ सेर | पंचमेवा १ सेर |
| चन्दनका चूरा २ सेर | चन्दनका चूरा २ सेर | चन्दनका चूरा २ सेर |
| कमलगट्टा १ सेर | कमलगट्टा १ सेर | कमलगट्टा १ सेर |
| भोजपत्र २ पाव | भोजपत्र २ पाव | भोजपत्र २ पाव |
| गुग्गुल १ सेर | गुग्गुल १ सेर | गुग्गुल १ सेर |
| आमकी लकड़ी२०मन | आमकी लकड़ी२०मन | आमकीलकड़ी २०मन |

| लक्ष्मीनारायणयज्ञ | नवग्रहमहायज्ञ | विश्वशान्तिमहायज्ञ |
|---|---|---|
| तिल ११ मन | तिल ७ मन | तिल ८ मन |
| चावल ५॥ मन | चावल ३॥ मन | चावल ४ मन |
| यव २॥ मन | यव १॥ मन | यव २ मन |
| चीनी १ मन | चीनी ३० सेर | चीनी १ मन |
| घृत २ टीन | घृत २ टीन | घृत २ टीन |
| पंचमेवा १ सेर | पंचमेवा १ सेर | पंचमेवा १ सेर |
| चन्दनका चूरा २सेर | चन्दनका चूरा २सेर | चन्दनका चूरा २सेर |
| कमलगट्टा १ सेर | कमलगट्टा १सेर | कमलगट्टा १सेर |
| भोजपत्र २ पाव | भोजपत्र २ पाव | भोजपत्र २ पाव |
| गुग्गुल १ सेर | गुग्गुल १ सेर | गुग्गुल १ सेर |
| आमकी लकड़ी २०मन | आमकी लकड़ी २०मन | आमकी लकड़ी २०मन |

## हवन-सामग्री

| पर्जन्ययज्ञ | गोयज्ञ | गायत्रीमहायज्ञ |
|---|---|---|
| तिल ११ मन | तिल ५ मन | तिल ३० मन |
| चावल ५॥ मन | चावल २॥ मन | चावल १५ मन |
| यव २॥ मन | यव १। मन | यव ७॥ मन |
| चीनी १। मन | चीनी ३० सेर | चीनी ४ मन |
| घृत २ टीन | घृत २ टीन | घृत ५ टीन |
| पंचमेवा १ सेर | पंचमेवा १ सेर | पंचमेवा २॥ सेर |
| चन्दनका चूरा २सेर | चन्दनका चूरा २सेर | चन्दनका चूरा ५ सेर |
| कमलगट्टा १ सेर | कमलगट्टा १ सेर | कमलगट्टा २॥ सेर |
| भोजपत्र २ पाव | भोजपत्र २ पाव | भोजपत्र १ सेर |
| गुग्गुल १ सेर | गुग्गुल १ सेर | गुग्गुल २॥ सेर |
| आमकी लकड़ी २०मन | आमकी लकड़ी १५ मन | आमकी लकड़ी ३० मन |

## मण्डप बनानेका सामान

| | |
|---|---|
| बांस या बल्ली १०-१० हाथके ४ | छप्पर या चटाई |
| बांस या बल्ली ७-७ हाथके १२ | मूँजकी रस्सी |
| बांस १६ हाथका १ | ईंटा पक्की २००० (३२ हाथके |
| वटकी लकड़ी ७-७ हाथकी २ | मण्डपके लिये ५००० ईंटा ) |
| वटकी लकड़ी ३॥ हाथकी १ | ईंटा कच्ची १०० |
| गूलरकी लकड़ी ७-७ हाथ की २ | टीन ( प्रत्येक कुण्डके लिये ) |
| गूलरकी लकड़ी ३॥ हाथकी १ | केलेके स्तम्भ ३२ |
| पीपलकी लकड़ी ७-७ हाथकी २ | १) लाल रंग |
| पीपलकी लकड़ी ३॥ हाथकी १ | १) काला रंग |
| पाकरकी लकड़ी ७-७ हाथकी २ | ॥) चूना [ सफेदी ] |
| पाकरकी लकड़ी ३॥ हाथकी १ | २० बांस फुटकर |

## कोटिहोमकी सामग्री

### ( १०८ कुण्डोंके यज्ञकी सामग्री )

| | |
|---|---|
| रोली २ सेर | गुलाबजलकी शीशी ५ |
| मौली २ सेर | कस्तूरीकी शीशी ५ |
| धूपबत्ती २५ पैकेट | दुग्ध ५ सेर प्रतिदिन |
| केसर ४ तोला | दही ५ सेर प्रतिदिन |
| कपूर २ छटांक | चीनी २॥ सेर प्रतिदिन |
| अबीर १ सेर | सहत २ सेर |
| बुक्का १ सेर | गोबर |
| सिन्दूर २ पाव | गोमूत्र |
| यज्ञोपवीत ५०० | पंचरत्नकी पुड़िया ६ |
| पीसीहलदी २॥ सेर | पुष्पमाला १२५ प्रतिदिन |
| रूई २ सेर | तुलसी प्रतिदिन |
| चावल | दूर्वा प्रतिदिन |
| पान २५० प्रतिदिन | बिल्वपत्र प्रतिदिन |
| सुपारी १० सेर | कुशा |
| पेड़ा ५ सेर प्रतिदिन | नारियल जटादार ५० |
| बतासा ५ सेर | गिरिके गोले २१ |
| ऋतुफल १२५ प्रतिदिन | ॥) पीली सरसों |
| पंचमेवा १० सेर | चन्दनका मुठ्ठा ५ |
| मिश्री १० सेर | होरसा ५ |
| इलायची छोटी २ पाव | १) लालरंग |
| लवंग १ पाव | १) पीलारंग |
| जावित्री ५ तोला | १) कालारंग |
| जायफल ५० | १) हरारंग |
| अतरकी शीशी १२ | मिट्टीका पुरवा २०० |

मिट्टीका सकोरा २००

पत्तल ५००

*पञ्चपल्लव—*

आम्रपत्र

गूलरपत्र

पाकरपत्र

वटपत्र

पीपलपत्र

*सर्वौषधि—*

।) मुरा

।) जटामासी

।) वच

।) कूट

॥) शिलाजीत

।) आंबाहलदी और दारूहलदी

।) सठी ( कचूर )

।) चम्पा

*सप्त-मृत्तिका—*

हाथीके स्थानकी मिट्टी

घोड़ेके स्थानकी मिट्टी

बिल (दीमक) की मिट्टी

नदी संगमकी मिट्टी

तालावकी मिट्टी

राजद्वारकी (चतुष्पथ) की मिट्टी

गोशालाकी मिट्टी

*सप्तधान्य—*

यव १। सेर

गेहूँ १। सेर

धान १। सेर

तिल १। सेर

ककुनी २ पाव

सावाँ २ पाव

चना १। सेर

कच्चा सूत ५०० हाथ

काला उड़द २५ सेर

**नवग्रहकी लकड़ी—*

मदारकी लकड़ी १०८

पलाशकी लकड़ी १०८

खैरकी लकड़ी १०८

अपामार्गकी लकड़ी १०८

पीपलकी लकड़ी १०८

गूलरकी लकड़ी १०८

शमीकी लकड़ी १०८

दूर्वा १०८

कुशा १०८

मृगचर्म नूतन १

कंबल नूतन १

सूतकी डोरी १० हाथ

रूई १ पाव

लोहेकी कंटिया ४

---

* नवग्रहकी लकड़ी प्रत्येक कुण्डमें लगती है।

तांबेका तार ५० हाथ
काष्ठकी चौकी नूतन बड़ी २
काष्ठका पीढ़ा नूतन ५

*यज्ञपात्र—*

प्रणीता १०८
प्रोक्षणी १०८
स्रुवा १०८
स्रुची १०८
स्फ्य १०८
वसोर्धारा १०८
अरणि-मन्था १०८
शंख १
घण्टा १
घड़ौल १
आरतीदानी १
धूपदानी १
प्रधान कलश चाँदीका अथवा ताम्रका बड़ा १
ताम्रके कलश बड़े ५
कमण्डलु बड़ा १
थाली १०८
पूर्णपात्र ( ब्रह्माके लिये ) १०८
बड़ा कटोरा कांसेका १०८
कांसेकी कटोरी (छायापात्र) १०८
बघोना (खीर पकानेके लिये) १०८
कटोरी पूजनार्थ २५०
बालटी पीतल १०
गंगासागर १०
अभिषेकपात्र १०८
परांत बड़ी १०
मिट्टीके कलश ५०

*देवताओंको चढ़ानेके वस्त्र—*

रेशमी पीतांबर २
रेशमी चादर २
रेशमी जनानी साड़ी २
दुशाला अथवा ऊनी चादर १
धोती सूती २१
डुपट्टा २१
अंगोछा २१
सौभाग्यपिटारी १
शृङ्गारदान १
सफेद कपड़ा २ थान
लाल कपड़ा ५ थान
हरा कपड़ा २ थान
पीला कपड़ा २ थान
काला कपड़ा २ थान
चंदवा पचरंगा बड़ा १
चंदवा छोटे ५
शीशा बड़ा १
तस्वीर देवताओंकी १०८
घुंघरू पीतलके १००
प्रधान देवताकी सुवर्णकी मूर्ति ४ तोलेकी १
वास्तुकी सुवर्णकी मूर्ति १० मासेकी १

क्षत्रपालकी सुवर्णकी मूर्ति १० मासेकी १
योगिनीकी सुवर्णकी मूर्ति १० मासेकी १
नवग्रहकी सुवर्णकी मूर्ति १० मासेकी १
असंख्यात रुद्रकी सुवर्णकी मूर्ति १० मासेकी १
सुवर्ण-जिह्वा १०८
सुवर्ण-खण्ड ५१
सिंहासन चांदीका १
छत्र चांदीका १
चँवर चांदीका १
थाली चांदीकी १
कटोरी चांदीकी ४
तस्तरी चांदीकी १
पञ्चपात्र चांदीका १
आचमनी चांदीकी १
अर्घा चांदीका १
तष्टा चांदीका १

*वरण सामग्री—*

धोती
दुपट्टा
अंगोछा
लोटा
गिलास
पंचपात्र
आचमनी
गोमुखीमाला
यज्ञोपवीत
खड़ाऊँ
आसन
सुवर्णकी अँगूठी

*आचार्यवरण-सामग्री—*

पीताम्बर २
दुशाला अथवा शिल्क १
अंगोछा १
लोटा चाँदीका १
गिलास चाँदीका १
पंचपात्र चाँदीका १
आचमनी चाँदीकी १
अर्घा चाँदीका १
तष्टा चाँदीका १
अंगूठी सुवर्णकी १
माला सुवर्णकी १
गोमुखीमाला १
रुद्राक्षमाला १
यज्ञोपवीत १
खड़ाऊँ १
ऊनी आसन १

*शय्यादान-सामग्री—*

पलंग नेवारका १
दरी १
गद्दा रूईका १
रजाई १
कंबल १
चदरा २
तकिया २
सुजनी १
मसहरी १
दुशाला १
कोठका कपड़ा
कमीजका कपड़ा
साफा (पगड़ी) १
पीतांबर १
जनानी रेशमी साड़ी १
छाता १
जूता १
छड़ी १
घड़ी १
पानदान १
पीकदान १
अतरदान १
अन्न सभी प्रकारके
घृत टीन १
सौभाग्य पिटारी १
सुवर्णके आभूषण
चाँदीके वर्तन
भोजनके वर्तन २१
चूल्हा १
लालटेन १
गीता, वेद और पुराणकी पुस्तक

*हवन-सामग्री—*

तिल २५० मन
चावल १२५ मन
यव ६२॥ मन
चीनी ३० मन
घृत ४० टीन
पंचमेवा २० सेर
चन्दनका चूरा १। मन
भोजपत्र ५ सेर
गुग्गुल ५ सेर
आमकी लकड़ी ५०० मन

## प्रतिष्ठा-सामग्री

रोली १ पाव
मौली १ पाव
धूपबत्ती ४ पैकेट
केसर ६ मासा
कपूर ४ तोला
१) अबीर (गुलाल)
१) बुक्का (अभ्रक)
१) सिन्दूर
हलदी पीसी २ पाव
मेंहदी पीसी १ पाव
यज्ञोपवीत ५०
रूई १ पाव
चावल १० सेर
पान ५० प्रतिदिन
सुपारी ५ सेर
पेड़ा १ सेर प्रतिदिन
बतासा १। सेर
ऋतुफल १ दर्जन प्रतिदिन
पंचमेवा १। सेर
मिश्री १। सेर
इलायची छोटी २ तोला
लवंग २ तोला
जावित्री २ तोला
जायफल २०
अतरकी शीशी २

गुलाबजलकी शीशी १
कस्तूरीकी शीशी १
गोबर
गोमूत्र
दुग्ध २ पाव प्रतिदिन
दधि १ पाव प्रतिदिन
चीनी २ पाव प्रतिदिन
घृत
सहत १ पाव
−) पीली सरसों
कच्चा सूत १०० हाथ
पुष्पमाला २५ प्रतिदिन
फुटकर पुष्प प्रतिदिन
−) तुलसी प्रतिदिन
−) दूर्वा प्रतिदिन
=) बिल्वपत्र प्रतिदिन
कुशा
नारियल जटादार २५
गिरिके गोले ११
चन्दनका मुठ्ठा सफेद १
चन्दनका मुठ्ठा लाल १
होरसा १
॥) लालरंग
॥) पीलारंग
॥) हरारंग
॥) कालारंग

पंचरत्नकी पुड़िया ७

*सर्वौषधि—*

।) मुरा
।) जटामासी
।) वच
।) कूट
॥) शिलाजीत
।) आंबाहलदी और दारूहलदी
।) सटी (कचूर)
।) चंपा
।) नागरमोथा

*सप्त-मृत्तिका—*

हाथीके स्थानकी मिट्टी
घोड़ेके स्थानकी मिट्टी
बल्मीक (दीमक) की मिट्टी
नदी संगमकी मिट्टी
तालाबकी मिट्टी
राजद्वार (चतुष्पथ) की मिट्टी
गोशालाकी मिट्टी

*सप्त धान्य—*

यव १। सेर
गेहूँ १। सेर
धान १। सेर
तिल १। सेर
ककुनी १ पाव
सावां २ पाव
चना १। सेर

*नवग्रहकी लकड़ी—*

मदारकी लकड़ी १०८
पलाशकी लकड़ी १०८
खैरकी लकड़ी १०८
अपामार्गकी लकड़ी १०८
पीपलकी लकड़ी १०८
गूलरकी लकड़ी १०८
शमीकी लकड़ी १०८
दूर्वा १०८
कुशा १०८
मृगचर्म नूतन १
कंबल नूतन १
सूतकी डोरी १० हाथकी
तांबेका तार २० हाथका
काला उड़द १ सेर
लोहेकी कंटिया ४
काष्ठकी चौंकी २
काष्ठका पाटा ३
॥) सुतरी
केलेके स्तम्भ ८
=) हरताल
=) मैनसिल
=) सुरमा काला
=) सुरमा सफेद
=) पारा

=) कांक्षीवरिका
=) कौसीस
-) गेरू
-) अगर
-) तगर
-) खश
-) वैंऽणवी
-) सहदेवी
-) लक्ष्मणा
-) ब्राह्मी
=) सोंठ
-) शमी
=) शतावरी
=) गुडूची
=) सौराष्ट्री
=) अर्जुन
=) आंवला
।।) गोरोचन
=) कौवाठोठी
=) शंखपुष्पी
=) वरियरा
=) भटकटैया
=) सोमलता
घीकुंवार (कुमारीका पाठा) १
बेलका फल ५
बेरका फल ५
आमका फल ५

केला ५
नारंगी ५
बड़ा नीबू १
कागजी नीबू २
जामुनपत्र
अशोकपत्र
शमीपत्र
कदम्बपत्र
सेमरपत्र
पंचपल्लवकी छाल
सेवार [नद्यावर्त]
ऊखका रस
सुरोदक
शान्त्युदक
क्षारोदक
सितपुष्पोदक
गोशृङ्गोदक
फलोदक
नवरत्नोदक
सुवर्णोदक
मेघजल
तीर्थजल
गुलाबजल
केवड़ाजल
अतर
फुलेल

